[illegible]

लानलोकान्सत्यलोव ... परिवेष्टितं बालार्कप्र
भयासम्यक्भासयंतंसम ... र्मुहुः सर्वार्थगोचरस्ता
नेसरस्वत्याः समन्वितं ... मणम्यदंडवद्भक्त्यानु
ष्ठावमुनिपुंगवः ४ प्र ... कामलमस्तितद्वदेष्या
मितेमुने ५ तस्याकर्णपक ... पूर्वमेवमभाषत ॥
६ इदानीमेकमेवाक्लिष्टे ... ामयि ७ प्राप्तेकलि
युगेघोरेनराः पुण्यविवर्जि ... मुखाः ८ परापवादनिरताः
परद्रव्याभिलाषिणः पर ... सापरायणाः ९ देहात्मदृष्टयोमूढानास्ति
काः पशुबुद्धयः मातृपितृकृतद्वेषाः स्त्रीदेवाः कामकिंकराः १० विप्रालोभग्रहग्रस्तावेद
विक्रयजीविनः धनार्जनाभ्यस्तविद्यामदमानविमोहिताः ११ त्यक्तस्वजातिकर्माणः प्राय
शः परवंचकाः क्षत्रियाश्चतथावैश्याः स्वधर्मत्यागशीलिनः १२ तथैवशूद्राश्चयेकेचिद्ब्राह्मणा
चारतत्पराः स्त्रियश्चप्रायशोभ्रष्टाभर्त्रवज्ञाननिर्भया १३ श्वश्रूद्रोहकारिण्योभविष्यंतिन
संशयः एतेषांनष्टबुद्धीनांपरलोकः कथंभवेत् १४ इतिचिंतातुलंचित्तंजायतेममसंततं
लघुपापेनयेनेषांपरलोकगतिर्भवेत् १५ तमुपायमुपाख्याहि सर्ववेत्तियतोभवेत् इत्युष्ट

राम

005614

[illegible]

लानलोकान्सत्यलोकमुपागमत् १ तत्र ब्रह्मामूर्त्तिमद्भिः वेदाद्यैः परिवेष्टितं बालार्कप्र

भयासम्यक्भासयंतंसभागृहं २ मार्कंडेयादिमुनिभिः स्तूयमानंमुहुर्मुहुः सर्वार्थगोचरज्ञा

नेसरस्वत्याः समन्वितं ३ चतुर्मुखंजगन्नाथंभक्ताभिष्टफलप्रदं प्रणम्यदंडवद्भक्त्यानु

ष्टावमुनिपुंगवः ४ प्रसन्नस्तंमुनिंप्राहस्वयंभूर्वैस्मितोत्तमे किंप्रष्टुकामस्त्वमसितत्तद्वदिष्या

मितेमुने ५ तस्याकर्ण्यवचस्तस्यमुनिर्ब्रह्माणमब्रवीत् त्वत्तः श्रुतंमयासर्वंपूर्वमेवम्भाष्टुभं ॥

६ इदानीमेकमेवास्तिश्रोतव्यंसुरसत्तमः तदद्यमपिब्रूहि यदितेनुग्रहोमयि ७ प्राप्तेकलि

युगेघोरेनराः पुण्यविवर्जिताः दुराचाररताः सर्वेसत्यवार्तापराङ्मुखाः ८ परापवादनिरताः

परद्रव्याभिलाषिणः परस्त्रीसक्तमनसः परहिंसापरायणाः ९ देहात्मदृष्टयोमूढानास्ति

काः पशुबुद्धयः मातृपितृकृतद्वेषाः स्त्रीदेवाः कामकिंकराः १० विप्रालोभग्रहग्रस्तावेद

विक्रयजीविनः धनार्जनार्थमभ्यस्तविद्यामदविमोहिताः ११ त्यक्तस्वजातिकर्माणः प्राय

शः परवंचकाः क्षत्रियाश्चतथावैश्याः स्वधर्मत्यागशीलिनः १२ तद्वच्छूद्राश्चयेकेचिद्ब्राह्मणा

चारतत्पराः स्त्रियश्चप्रायशोभ्रष्टाभर्त्रवज्ञाननिर्भयाः १३ श्वशुरद्रोहिकारिण्योभविष्यंतिन

संशयः एतेषांनष्टबुद्धीनांपरलोकः कथंभवेत् १४ इतिचिंताकुलंचित्तंजायतेमनसंततं

लघुपायेनयेनेषांपरलोकगतिर्भवेत् १५ तमुपायमुपाख्याहिसर्वंवेत्तियतोभवान् इत्युक्त

राम

अ॰
२

लिखित्वा पुस्तकेध्यात्मरामायणमशेषतः ३२ यो दद्याद्रामभक्तेभ्यस्तस्य पुण्यफलं शृणु अधीतेषु च वे
वेषु शास्त्रेषु पारकृतेषु च ३३ यत्फलं दुर्लभं लोके तत्फलं तस्य संभवे एकादशीदिने ध्यात्म
रामायणमुपोषितः ३४ यो रामभक्तः सदा सेवां करोति नरोत्तमः तस्य पुण्यफलं वक्ष्ये शृणु वैष्ण
वसत्तमः ३५ मन्वन्तरेषु गायत्रीपुरश्चर्याफलं लभेत् उपवासव्रतं कृत्वा श्रीरामनवमीदिने ।
३६ रात्रौ जागरणं कृत्वा अध्यात्मरामायणमनन्यधीः यः पठेच्छृणुयाद्वापि तस्य पुण्यं वदाम्यहं
३७ कुरुक्षेत्रादिनिखिलपुण्यतीर्थेष्वनेकशः आत्मतुल्यधनं सूर्यग्रहणे सर्वतोमुखे विप्रेभ्यो
वासमुख्येभ्यो दत्त्वा यत्फलमश्नुते तत्फलं संभवेत्तस्य सत्यं सत्येन संशयः ३८ यो गायत्यध्या
त्मरामायणमहर्निशं आज्ञां तस्य प्रतीच्छन्ते देवा इन्द्रपुरोगमाः ४० पठेन्नित्यमध्यात्मरा
मायणमव्रतः यद्यत्करोति यः कर्म तत्तत्कोटिगुणं भवेत् ४१ तत्र श्रीरामहृदयं यः पठे
त्सुसमाहितः स ब्रह्मघ्नोपि पूतात्मा त्रिभिरेव दिनैर्भवेत् ४२ श्रीरामहृदयं यस्तु हनु-
मत्प्रतिमांतिके त्रिःपठेन्नित्यहं मौनी स सर्वसिद्धिभाग्भवेत् ४३ पठन् श्रीरामहृदयं तुलस्य
श्वत्थयोर्यदि प्रदक्षिणं प्रकुर्वीत ब्रह्महत्यानिवर्तते ४४ श्रीरामगीतामाहात्म्यं कृत्स्नं जा
नाति शंकरः तदर्द्धं गिरिजा वेत्ति तदर्द्धं वेद्म्यहं मुने ४५ तन्ने किंचित्प्रवक्ष्यामि कृत्स्नं वक्तुं
न शक्यते यज्ज्ञात्वा तत्क्षणाल्लोकश्चित्तशुद्धिमवाप्नुयात् ४६ श्रीरामगीता यत्पापं न नाशयति
नारद तन्न पश्याम्यहं लोके मार्गमाणोपि सर्वदा ४७ रामेणोपनिषत्सिंधुमुन्मथ्योत्पा
दितं मुदा लक्ष्मणायार्पितं गीतं सुधां पीत्वामरो भवेत् ४८ जमदग्नि[illegible]ः पूर्वं कार्त्तिकी

रा॰
२

धात्रस्माकर्ण्यप्रत्नुवाचांबुजासनः १६ ब्रह्मोवाच साधुपृष्टं त्वया साधो वक्ष्येतच्छृणु सादरं पुरा
त्रिपुरहंतारं पार्वती भक्तवत्सलं १७ श्रीरामतत्त्वं जिज्ञासुः पप्रच्छ विनयान्विता प्रियायै गि
रिशस्तस्मै गूढं व्याख्यातवान्स्वयं १८ पुराणोत्तममध्यात्मरामायणमिति स्मृतं तत्पार्वती
जगद्धात्री पूजयित्वा दिवानिशं १९ आलोचयंती स्वानंदमग्नातिष्ठति सांप्रतं प्रचरिष्यति तल्लो
के शापस्पृष्टवशाद्यतः २० तस्याध्ययनमात्रेण जनाः यास्यंति सद्गतिं तावद्धि जृंभते पापं ब्र
ह्महत्यापुरःसरं २१ यावज्जगति नाध्यात्मरामायणमुदेष्यति तावत्कलेर्महोत्साहो निः
शंकं संप्रवर्त्तते २२ यावज्जोतावत्सर्वाणि शास्त्राणि विवदंति परस्परं यावज्जोतावत्स्वरूपं राम
सतुर्वीर्यं महतामपि २३ यावज्जो०। तावद्यमभटाः क्रूराः संचरिष्यंति निर्भयं यावज्जो० अ
ध्यात्मरामायणस्य कीर्त्तनं श्रवणं द्विजे २४ फलं वक्तुं न शक्नोमि कार्त्स्न्येन मुनिसत्तम
तथापि तस्य माहात्म्यं वक्ष्ये किंचित्तवानघ २६ श्रृणु चित्तं समाधाय शिवेनोक्तं पुरा मम अ
ध्यात्मरामायणतः श्लोकं श्लोकार्द्धमेव च २७ यः पठेद्भक्तिसंयुक्तः स पापान्मुच्यते क्षणा
त् यस्तु प्रत्यहमध्यात्मरामायणमनन्यधीः २८ यथाशक्ति पठेद्भक्त्या स जीवन्मुक्त उच्यते
यो भक्त्यार्चयते ध्यात्मरामायणमतंद्रितः २९ दिने दिनेऽश्वमेधस्य फलं तस्य भवेन्मुने।
यदृच्छयापि यो ध्यात्मरामायणमनादरात् ३० अन्यतः श्रृणुयान्मर्त्यः सोपि मुच्येत पात
कात् नमस्करोति यो ध्यात्मरामायणमदूरतः ३१ सर्वदेवार्चनफलं संप्राप्नोति न संशयः

अ
२

हरिमेवयांतिते ३ अध्यात्मरामायणमेवनित्यंपठेद्यदीछेद्भवबंधमुक्तिं गावःसहस्रायुतकोटिदा
नंफलंलभेद्यःश्रृणुयात्सनित्यं ४ पुरारिगिरिसंभूता श्रीरामार्णवसंहिता अध्यात्मरामगंगे
यंपुनातिभुवनत्रयं ५ कैलाशाग्रेकदाचिद्रविशतविमलेमंदरे रत्नपीठेसंविष्टंध्याननिष्ठंत्रिन
यनमभयंसेवितंसिद्धसंघैः देवीवामांकसंस्थागिरिवरतनयापार्वतीभक्तिनम्राप्राहेदेवमीशंस
कलमलहरवाक्यमानंदकंदं ६ श्रीपार्वत्युवाच नमोस्तुतेदेवजगन्निवाससर्वात्मदृक्त्वंपर
मेश्वरोसि सदच्छामित्तत्वंपुरुषोत्तमस्त्वं सनातनस्त्वंचसनातनोसि ७ गोप्यंतदन्यतमनं
तवाच्यंवदंतिभक्तेषुमहानुभावाः तदप्यहोहंतवदेवभक्ताप्रियोसिमेत्वंवदमेनुपृष्टं ८ ता
नंचविज्ञानमथानुभक्तिवैराग्ययुक्तंचमितंविभास्वं जानाम्यहंयोषिदपित्वदुक्तं यथातथाब्रूहितरं
तियेन ९ इच्छामिचान्यंनुपरंरहस्यंतदेवचाग्रेवदवामदेव श्रीरामचंद्रेखिलतत्वसारेभक्तिर्दृ
ढानोभवतिप्रसिद्धा १० भक्तिःप्रसिद्धाभवमोक्षणायनान्यत्ततःमस्तिकिंचित् तथापिहृत्संशय
बंधनंमेविभेत्तुमर्हस्यमलोक्तिभिस्त्वं ११ वदंतिरामंपरमेकमाद्यंनिरस्तमायागुणसंप्रवाहं भ
जंतिचाहर्निशमप्रमत्ताःपरंपदंयांतितथैवसिद्धाः १२ वदंतिकेचित्परमोपिरामःस्वाविद्य
यासंवृतमात्मसंज्ञं जानातिनात्मानमतोपरेणसंबोधितोवेदपरात्मतत्वं १३ यदिस्मजानातिकु
तोविलापः सीताकृतेतेनकृतःपरेण जानातिनैवंयदिकेनसेव्यःसमोहिसर्वैरपिजीवजातैः
१४ अत्रोत्तरंकिंविदितंभवद्भिस्तद्ब्रूहिमेसंशयभेदवाक्यं श्रीमहादेवउवाच धन्यासिभक्तासि
परात्मनस्त्वं यज्ज्ञातुमिच्छस्सिवरंरामतत्वं पुरानकेनाप्यभिचोदितोहं वक्तुंरहस्यंपरमंनिगूढं।
१५ त्वयाद्यपरिपरिचोदितोहं वक्ष्येनमस्कृत्यरघूत्तमंते रामःपरात्माप्रकृतेरनादिरानंद

३

तेषपेत्तु या यत्नुर्विद्यामभ्यसितुं महे श्रारस्येतिकेवलम् ४९ अधीयमानं पार्वत्या रामगीतां प्रयत्न
तः फलं गृहीत्वा पठन् नारायणकलामगात् ५० ब्रह्महत्यादिपापानां निष्कृतिं यदि वांछति
रामगीतां मासमात्रं पठित्वा मुच्यते नरः ५१ दुःप्रतिग्रहदुर्भोज्यदुरालापादिसंभवं पापं स
कृत्कीर्तनेन रामगीता विनाशयेत् ५२ शालग्रामशिलाग्रे च तुलस्यश्वत्थसंनिधौ यतीनां पु
रतः पश्चाद्रामगीतां पठेत्तु यः ५३ सतत्फलमवाप्नोति यद्वाचामपि न गोचरे रामगीतां पठन् भ
क्त्या यः श्राद्धे भोजयेद्द्विजान् ५४ तस्यते पितरः सर्वे यांति विष्णोः परमं पदं एकादश्यां निराहा
रो नियतो द्वादशीदिने ५५ स्थित्वागस्त्यतरोर्मूले रामगीतां पठेत्तु यः स एव राघवः साक्षात्स
र्वदेवैश्च पूज्यते ५६ विना दानं विना ध्यानं विना तीर्थावगाहनं रामगीतां नरोधीत्य तत्र दानेन
त्फलं व्रजेत् ५७ बहुनाकिमिहोक्तेन शृणु नारद तत्त्वतः कोटिडवाणि तीर्थागमशास्त्राणि च।
५८ नार्हंति नाल्यामध्यात्मरामायणकलामपि अध्यात्मरामचरितस्य मुनीश्वरायाम माहात्म्य
मेतत् उदितं कमलासनेन यः श्रद्धया पठति वा शृणुयात्स मर्त्यः प्राप्नोति विष्णुपदवीं सुरपूज्य
मानः ६० इति श्रीमदध्यात्मरामायणे उत्तरखंडे एकषष्टितमोऽध्यायः १ सूत उवाच यः
पृथ्वीभरवारणाय दिविजैः संप्रार्थितश्चिन्मयः संजातः पृथिवीतले रविकुले मायामनु
ष्योव्ययः निःशेषं हतराक्षसः पुनरगाद्ब्रह्मत्वमाद्यं स्थिरां कीर्तिं पापहरां विधाय जगतां तं जान
कीशं भजे १ विश्वोद्भवस्थितिलयादिषु हेतुमेकं च मायाश्रयं विगतमाय
मचिंत्यमूर्तिं आनंदसांद्रममलं निजबोधरूपं सीतापतिं विदिततत्त्वमहं नमामि २ पठंति
ये नित्यमनन्यचेतसः शृण्वंति चाध्यात्मिकसंज्ञितं शुभं रामायणं सर्वपुराणसंमितं निर्धूतपापा

अ॰रा॰
५

सिंहासने समासीनं कोटिसूर्यसमप्रभं २८ दृष्ट्वा तदा हनूमंतं प्रांजलिं पुरतः स्थितं कृ
तकार्यं निराकांक्षं ज्ञानापेक्षं महामतिं २९ रामः सीतामुवाचेदं ब्रूहि तत्वं हनूमते निःक
ल्मषोयं ज्ञानस्यापात्रं नौ नित्यभक्तिमान् ३० तथेति जानकी प्राह तत्वं रामस्य निश्चितं ह
नूमते प्रपन्नाय सीता लोकविमोहिनी ३१ सीताउवाच रामं विद्धि परं ब्रह्म सच्चिदानं
दमव्ययं सर्वोपाधिविनिर्मुक्तं सत्तामात्रमगोचरं ३२ आनंदं निर्मलं शांतं निर्विकारं निरंजनं
सर्वव्यापिनमात्मानं स्वप्रकाशमकल्मषं ३३ मां विद्धि मूलप्रकृतिं सर्गस्थित्यंतकारिणीं
तस्य सान्निध्यमात्रेण सृजामीदमतंद्रिताः ३४ तत्सांनिध्यान्मया सृष्टं तस्मिन्नारोप्यतेऽबु
धैः अयोध्यानगरे जन्म रघुवंशेतिनिर्मले ३५ विश्वामित्रसहायत्वं मखसंरक्षणं ततः अहि
ल्याशापशमनं चापभंगो महेशितुः ३६ मत्पाणिग्रहणं पश्चाद्भार्गवस्य मदक्षयः अयोध्या
नगरे वासो मया द्वादशवार्षिकः ३७ दंडकारण्यगमनं विराधवध एव च मायामारीचम
रणं मायासीताहृतिस्तथा ३८ जटायुषो मोक्षलाभः कबंधस्य तथैव च शबर्याः पूजनं पश्चा
त्सुग्रीवेण समागमः वालिनश्च वधः पश्चात्सीतान्वेषणमेव च सेतुबंधश्च जलधौ लंका
याश्चा निरोधनं ३९ रावणस्य वधो युद्धे सपुत्रस्य दुरात्मनः विभीषणे राज्यदानं पुष्पके
ण मया सह ४० अयोध्यागमनं पश्चाद्राज्ये रामाभिषेचनं एवमादीनि कर्माणि मयैवाचरता ५

एकःपुरुषोस्मिमोहि १६ स्वमाययाकृत्स्नमिदंहिसृष्ट्वानभोवदंतर्वहिरस्थितोयः सर्वांतरस्थो
पिनिगूढआत्मास्वमाययासृष्टमिदंविचष्टे १७ जगंतिनित्यंपरितोभ्रमंतियत्सन्निधौचुंबु
कलोहवद्धिः एतन्नजानंतिविमूढचेतसः स्वाविद्ययासंवृतमानसास्ते १८ स्वाज्ञानमप्या
त्मनिशुद्धबुद्धेस्वारोपयंतीहनिरस्तमाये संसारमेवानुसरंतियेवैपुत्रादिशक्ताःपुरुकर्म
युक्ताः १९ जानातिनैवंहृदिस्थितंवैचामीकरंकंठगतंयथाज्ञः यथाप्रकाशोनतुविद्यते
रवौज्योतिःस्वभावात्परमेश्वरेतथा २० विशुद्धविज्ञानघनेरघूत्तमेविद्याकथंस्यात्परतः
परात्मनि यथाहिचाक्ष्णोभ्रमतोगृहादिकंविनष्टदृष्टेर्भ्रमतीवदृश्यते २१ तथैवदेहेंद्रि
यकर्तुरात्मनःकृतंपरेध्यस्यजनोविमुह्यति नाहोनरात्रिःसवितुर्यथाभवेत्प्रकाशरूपाव्य
भिचारतःक्वचित् २२ ज्ञानंतथाज्ञानमिदंद्वयंहरौरामेकथंस्थास्यतिशुद्धचिद्घने तस्मा
त्परानंदमयेरघूत्तमेविज्ञानरूपेनहिविद्यतेतमः २३ अज्ञानसाक्षिण्यरविंदलोचने
मायाश्रियत्वान्नविमोहकारणं २४ श्रीमहादेवउवाच अथतेकथयिष्यामिरहस्यमपि
दुर्लभं सीतारामामरुत्सूनुसंवादंमोक्षसाधनं २५ पुरारामायणेरामोरावणंदेवकंटकं।
हत्वारणेरणश्लाघीसपुत्रबलवाहनं २६ सीतायासहसुग्रीवलक्ष्मणाभ्यांसमन्वितः।
अयोध्यामगमद्रामोहनुमत्प्रमुखैर्वृतः २७ अभिषिक्तःपरिवृतो वसिष्ठाद्यैर्महात्मभिः

अ०
५

मस्यवचनंयथा ५५ जातिभ्रष्टोतिपापीपरधनपरदारेषुनित्योद्यतोवा स्तेयीब्रह्मघ्नमा
तापितृवधनिरतोयोगिवृंदापकारी यः संपूज्याभिरामंपठतिचहृदयंरामचंद्रस्यभक्त्या
योगींद्रैरप्यलभ्यंपदमपि लभतेसर्वदेवैःसपूज्यः ५६ इतिश्रीमदध्यात्मरामायणे
उमामहेश्वरसंवादेश्रीब्र०उ० श्रीरामहृदयंनामप्रथमोध्यायः १ श्रीपार्वत्युवाच धन्या
स्म्यनुगृहीतास्मिकृतार्थास्मिजगत्प्रभो विछिन्नोमेतिसंदेहग्रंथिर्भवदनुग्रहात् १ त्व
न्मुखाद्गलितंरामतत्वामृतरसायनंपिबंत्यामेमनोदेवनतृप्यति २ श्रीरामकथातत्वंश्रु
तंसंक्षेपतोमया इदानींश्रोतुमिच्छामिविस्तरेणकथांतरं ३ श्रीमहादेवउवाच शृणुदे
वीप्रवक्ष्यामिगुह्याद्गुह्यतरंमहत् अध्यात्मरामचरितंरामेणोक्तंपुरामम ४ तदिदंकथयि
ष्यामित्वयापह यच्छ्रुत्वामुच्यतेजंतुरज्ञानोत्थमहाभयात् ५ प्राप्नोतिपरमामृद्धिंदीर्घायुः
पुत्रसंतति भूमिर्भारेणमग्नादशवदनमुखाशेषरक्षोगणानां ६ धृत्वागोरूपमाद्यादिवि
जमुनिःजनैःसाकमब्जासनस्य गत्वालोकंरुदंतीव्यसनमुपगतंब्रह्मणेप्राहसर्वं ब्रह्माध्यात्वा
मुहूर्तंसकलमपिहृदावेदशेषात्मकत्वात् ६ तस्मात्क्षीरसमुद्रमेवमगमद्भूत्यायदेवैर्वृतोदे
व्याचाखिललोकहृत्स्थमजरंसर्वज्ञमीशंहरिं ७ अस्तौषीच्छ्रुतिसिद्धनिर्मलपदैःस्तोत्रैःपुरा
णोद्भवैर्भक्त्यागद्गदयागिरातिविमलैरानंदबाष्पैर्वृतः ८ ततःस्फुरत्सहस्रांशुसहस्रसदृशः ५
प्रभुः आविरासीद्धरिःप्राच्यांदिशाव्यपनयन्तमः ९ कथंचिद्दृष्टवान्ब्रह्मादुर्दर्शमकृता

न्यपि ४१ आरोपयंति रामेस्मिन्निर्विकारेऽखिलात्मनि रामो न गच्छति न तिष्ठति नानुशोचत्या
कांक्षते त्यजति नो न करोति किंचित् सांद्रानंदविग्रहः आनंदमूर्त्तिरचलः रामो राजी
वलोचनं अगणामहिनो मायागुणाननुगतो हि तथा विभाति ४२ श्रीमहादेव उवाच त
तो रामः स्वयं प्राह हनूमंतमुपस्थितं शृणु तत्त्वं प्रवक्ष्यामि ह्यात्मानात्मपरात्मनां ४३ आका
शस्य यथा भेदस्त्रिविधो दृश्यते महान् जलाशये महाकाशस्तदवच्छिन्न एव हि ४४ प्रतिबिं
बाख्यमपरं दृश्यते त्रिविधं नभः बुद्ध्यवच्छिन्नचैतन्यमेकं पूर्णमथापरं ४५ आभासस्त्वप
रं बिंबभूतमेकं त्रिधा चितिः साभासबुद्धेः कर्तृत्वमवच्छिन्नेऽविकारिणी ४६ साक्षिण्यारो
प्यते भ्रांत्या जीवत्वं च तथा बुधैः आभासस्तु मृषा बुद्धिरविद्याकार्यमुच्यते ४७ अविच्छि
न्नं तु तद्ब्रह्म विच्छेदस्तु विकल्पितः अविच्छिन्नस्य पूर्णेन एकत्वं प्रतिपद्यते ४८ तत्त्वमस्या
दिवाक्यैश्च साभासस्याहमस्तथा ऐक्यज्ञानं यदोत्पन्नं महावाक्येन चात्मनि ४९ तदावि
द्या स्वकार्यैश्च नश्यत्येव न संशयः एतद्विज्ञाय मद्भक्तो मद्भावायोपपद्यते ५० मद्भक्तिविमु
खानां तु शास्त्रगर्तेषु मुह्यतां न ज्ञानं न च मोक्षः स्यात्तेषां जन्मशतैरपि ५१ इदं रहस्यं हृद
यं ममात्मनो मयैव साक्षात्कथितं तवानघ मद्भक्तिहीनाय कदाचन त्वया दातव्यमैंद्राद
पि राज्यतोऽधिकं श्रीमहादेव उवाच एतत्तेऽभिहितं देवी श्रीरामहृदयं मया अतिगुह्यतमं
हृद्यं पवित्रं पापशोधिनं ५३ साक्षाद्रामेण कथितं सर्ववेदांतसंग्रहं यः पठेत्सततं भक्त्या
स मुक्तो नात्र संशयः ५४ ब्रह्महत्यादिपापानि बहुजन्मार्जितान्यपि नश्यंत्येव न संदेहो रा

अ॰ ६

गीकृतं मया सइदानीं दशरथो भूत्वा तिष्ठति भूतले तस्याहं पुत्रतामेत्य कौसल्यायां शुभोदये
२६ चतुर्धात्मानमेवाहं सृजामीतरयोः पृथक् योगमायापि सीतेति जनकस्य गृहे तदा ।२७
उत्पत्स्यते तया सार्धं सर्वं संपादयाम्यहं इत्युक्त्वांतर्दधे विष्णुर्ब्रह्मा देवानथाब्रवीत् २८ वि
ष्णुर्मानुषरूपेण भविष्यति रघोः कुले यूयं सृजध्वं सर्वेपि वानरेष्वंशसंभवान् विष्णोः सहा
यं कुरुत यावत्स्थास्यति भूतले ३० इति देवान्समादिश्य समाश्वास्य च मेदिनीं ययौ ब्र
ह्मा स्वभवनं विज्वरः सुखमास्थितः ३१ देवाश्च सर्वे हरिरूपधारिणः स्थिताः सहायार्थमित
स्ततो हरेः महाबलाः पर्वतवृक्षयोधिनः प्रतीक्षमाणा भगवंतमीश्वरं ३२ इति श्रीमद
ध्यात्मरामायणे उमामहेश्वरसंवादे द्वितीयोऽध्यायः ॥२॥ श्रीमहादेव उवाच अथ राजा
दशरथः श्रीमान् सत्यपराक्रमः अयोध्याधिपतिर्वीरः सर्वलोकेषु विश्रुतः १ अनपत्यः स दुः
खेन पीडितो गुरुमेकदा वसिष्ठं मुनिशार्दूलमभिवाद्येदमब्रवीत् २ स्वामिन्पुत्राः कथं मे स्युः
सर्वलक्षणलक्षिताः पुत्रहीनस्य मे राज्यं सर्वं दुःखाय कल्पते ३ ततोऽब्रवीद्वसिष्ठस्तं भवि
ष्यंति सुतास्तव चत्वारः सत्वसंपन्ना लोकपाला इवापराः ४ शांताभर्तारमानीय ऋष्यशृंगं
तपोधनं अस्माभिः सहितः पुत्रकामेष्टिं शीघ्रमाचर ५ तथेति मुनिमानीय मंत्रिभिः सहि
तः शुचिः यज्ञकर्म समारेभे मुनिभिर्वीतकल्मषैः ६ श्रद्धया हूयमानेऽग्नौ तप्तजांबूनदप्रभः
पायसं स्वर्णपात्रस्थं गृहीत्वोवाच हव्यवाट् ७ गृहाणाय पायसं दिव्यं पुत्रीयं देवनिर्मितं लप्स्यसे
परमात्मानं पुत्रत्वेन न संशयः ८ इत्युक्त्वा पायसं दत्वा राज्ञे सोंतर्दधेऽनलः ववंदे मुनिं। ९

त्मनं इंद्रनीलप्रतीकाशं स्मितास्यं पद्मलोचनं ९ किरीटहारकेयूरकुंडलैः कटकादिभिः वि
भ्राजमानं श्रीवत्सकौस्तुभप्रभयान्वितं १० स्तुवद्भिः सनकाद्यैश्च पार्षदैः परिवेष्टितं शंखच
क्रगदापद्मवनमालाविराजितं ११ स्वर्णयज्ञोपवीतेन स्वर्णवर्णांबरेण च श्रिया भूम्या च स
हितं गरुडोपरि संस्थितं १२ हर्षगद्गदया वाचा स्तोतुं समुपचक्रमे ब्रह्मोवाच नतोऽस्मि ते प
दं देव प्राणबुद्धींद्रियात्मभिः १३ यच्चिंत्यते कर्मपाशाद्धृदि नित्यं मुमुक्षुभिः मायया गुणमय्या
त्वं सृजस्यवसि लुंपसि १४ जगत्तेन न ते लेपः आनंदानुभवात्मनः तथा शुद्धिर्न दुष्टानां दा
नाध्ययनकर्मभिः १५ शुद्धात्मनां ते यशसि सदा भक्तिमतां यथा अतस्त्वं वांहि र्मे दृढः चित्त
दोषानुपत्तये १६ सर्वांतर्हृदये नित्यं मुनिभिः सात्विकैर्हृतः ब्रह्माद्यैः सर्वसिद्ध्यर्थमस्मा
भिः पूर्वसेवित १७ अपरोक्षानुभूत्यर्थं ज्ञानिभिर्हृदि भावितः तवांघ्रिपजा निर्माल्यतुलसी
मालया विभो १८ स्पर्द्धते वक्षसि पदं लब्ध्वापि श्रीः सपत्निवत् अतस्त्वत्पादभक्तेषु तव भ
क्तिः श्रेयोयिका १९ भक्तिमेवाभिवांछंति त्वद्भक्ताः सारवेदिनः अतस्त्वत्पादकमले भक्तिरे
व सदास्तु मे २० संसारामयतप्तानां भेषजं भक्तिरेव ते इति ब्रुवाणं ब्रह्माणं बभाषे भगवान्।
हरिः २१ किं करोमीति तं वेधाः प्रत्युवाचातिहर्षितः भगवन् रावणो नाम पौलस्त्यतनयो म
हान् २२ राक्षसानामधिपतिर्मद्दत्तवरदर्पितः त्रिलोकीं लोकपालांश्च बाधते विश्वबाधकः २३
मानुषेण मृतिस्तस्य मया कल्याण कल्पिता अतस्त्वं मानुषो भूत्वा जहि देव रिपुं प्रभो २४
॥ श्रीभगवानुवाच कश्यपस्य वरो दत्तस्तपसा तोषितेन मे याचितः पुत्रभावाय तथेत्यंगीकृतं

अ· ७

षः त्वममोदरे संभूत इति लोकान्विडंबसे २६ भक्तेषु पारवश्यं ते दृष्टं मेद्य रघूत्तमः संसारसाग
रेमग्नापतिपुत्रधनादिषु २७ भ्रमामि मायया तेद्य पादमूलमुपागता देव त्वद्रूपमेतन्मे सदा तिष्ठतु
मानसे २८ आवृणोति पुनर्मां माया तव विश्वविमोहिनी उपसंहर विश्वात्मन्नदो रूपमलौकिकं
२९ दर्शयस्व महानंदबालभावं सुकोमलं ललितालिंगनालापैस्तरिष्याम्युत्कटं तमः ।
३० श्रीभगवानुवाच यद्यदिष्टं तवास्त्यंब तत्तद्भवतु नान्यथा अहं तु ब्रह्मणा पूर्वं भूमेर्भारा
पनुत्तये ३१ प्रार्थितो रावणं हंतुं मानुषत्वमुपागतः त्वया दशरथेनाहं तपसाराधितः पुरा ।
३२ मत्पुत्रत्वाभिकांक्षिण्या तथा कृतमनिंदितं रूपमेतत्त्वया दृष्टं प्राक्तनतपसः फलं ३३ म
द्दर्शनं विमोक्षाय कल्पते ह्यन्यदुर्लभं संवादमावयोर्यस्तु पठेद्वा शृणुयादपि ३४ स याति
मम सारूप्यं मरणे मत्स्मृतिर्भवेत् इत्युक्त्वा मातरं रामो बालो भूत्वा रुरोद ह ३५ बालत्वेपी
द्रनीलाभो विशालाक्षोतिसुंदरः बालारुणप्रतीकाशो लालिताखिललोकपः ३६ अथ
राजा दशरथः श्रुत्वा पुत्रोद्भवोत्सवं आनंदार्णवमग्नोसावाययौ गुरुणा सह ३७ रामं रा
जीवपत्राक्षं दृष्ट्वा हर्षाश्रुसंप्लुतः गुरुणा जातकर्माणि कर्तव्यानि चकार सः ३८ कैकेयी
चाथ भरतमसूत कमलेक्षणं सुमित्रायां यमौ जातौ पूर्णेंदुसदृशाननौ ३९ तदा ग्रामस
हस्राणि ब्राह्मणेभ्यो ददौ मुदा सुवर्णानि च रत्नानि वासांसि सुरभीः शुभाः ४० यस्मिन्रम
ते मुनयो विद्ययाज्ञानविप्लवे तं गुरुः प्राह रामेति रमणाद्राम इत्यपि ४१ भरणाद्भरतो ना
म लक्ष्मणं लक्षणान्वितं शत्रुघ्नं शत्रुहंतारमेवं गुरुरभाषत ४२ लक्ष्मणो रामचंद्रेण शत्रु
घ्नो भरतेन च द्वंद्वीभूय चरंतौ तौ पायसांशानुसारतः ४३ रामस्तु लक्ष्मणेनाथ विचर ७

शार्दूलैराजोलब्धःमनोरथः ९ वशिष्ठऋष्यशृंगाभ्यामनुज्ञातोददौहविः कौशल्यायैसकै
केय्याअर्द्धमर्द्धंप्रयत्नतः १० ततःसुमित्रासंप्राप्ताजग्राहपौत्रिकेचरुं कौशल्यानुस्वभागार्द्धं
ददौप्रीतसमन्विता ११ कैकेय्यापिस्वभागार्द्धंददौतस्यैप्रमोदतः उपयुज्यचरुंसर्वाःस्त्रि
योगर्भसमन्विताः १२ देवताइवतारेजुःस्वभासाराजमंदिरे दशमेमासिकौशल्यासुषुवे
पुत्रमद्भुतं १३ मधुमासेसितेपक्षेनवम्यांकर्कटेशुभे पुनर्वस्वृक्षसहितेउच्चस्थेग्रहपंचके
१४ मेषंपूषणिसंप्राप्तेपुष्पवृष्टिसमाकुले आविरासीज्जगन्नाथःपरमात्मासनातनः १५ नी
लोत्पलदलश्यामःपीतवासाश्चतुर्भुजः जलजारुणनेत्रांतःस्फुरत्कुंडलमंडितः १६ सह
स्रार्कप्रतीकाशःकिरीटीकुंचितालकः शंखचक्रगदापद्मवनमालाविराजितः १७ अनु
ग्रहार्थहृत्स्थेंदुसूचकास्मितचंद्रकः करुणारससंपूर्णविशालोत्पललोचनः १८ श्रीवत्स
हारकेयूरनूपुरादिविभूषणं दृष्ट्वातंपरमात्मानंकौशल्याविस्मयाकुला १९ हर्षाश्रुपूर्ण
नयनानत्वाप्रांजलिरब्रवीत् देवदेवनमस्तेस्तुशंखचक्रगदाधर २० परमात्माच्युतोनं
तः पूर्णस्त्वंपुरुषोत्तमः वदंत्यगोचरंवाचांबुद्ध्यादीनामतींद्रियं २१ त्वांवेदवादिनःसत्तामात्रं
ज्ञानैकविग्रहं त्वमेवमाययाविश्वंसृजस्यवसिहंसिचा २२ सत्वादिगुणसंयुक्तःतुर्यए
वामलःसदा करोषीवनकर्त्तात्वंगच्छसीवनगच्छसि २३ नशृणोषिशृणोषीवपश्यसीवनप
श्यसि अप्राणोह्यमनाःशुद्धइत्यादिश्रुतिरब्रवीत् २४ समःसर्वेषुभूतेषुतिष्ठन्नपिनलक्ष्य
से अज्ञानध्वांतचित्तानांव्यक्तएवसुमेधसां २५ जठरेतवदृश्यंतेब्रह्मांडाःपरमाणु

अ॰
८

लकांडे तृतीयोऽध्यायः ३ कदाचित्कौशिकोऽभ्यागादयोध्यां ज्वलनप्रभः द्रष्टुं रामं परात्मानं जातं ज्ञात्वा स्वमायया १ दृष्ट्वा दशरथो राजा प्रत्युत्थाय चिरेण तु वसिष्ठेन समागम्य पूजयित्वा यथाविधि २ अभिवाद्य मुनिं राजा प्रांजलिर्भक्तिनम्रधीः कृतार्थोऽस्मि मुनींद्राहं त्वदागमनकारणात् ३ त्वद्विधा यद्गृहं यांति तत्रैवायांति संपदः यदर्थमागतोऽसि त्वं ब्रूहि सत्यं करोमि तत् ४ विश्वामित्रोऽपि तं प्रीतः प्रत्युवाच महामतिः अहं पर्वणि संप्राप्ते दृष्ट्वा यष्टुं सुरान्पितॄन् ५ यदारभे मखं दैत्या विघ्नं कुर्वंति नित्यशः मारीचश्च सुबाहुश्चापरे चानुचरास्तयोः ६ अतस्तयोर्वधार्थाय ज्येष्ठं रामं प्रयच्छ मे लक्ष्मणेन सह भ्रात्रा तव श्रेयो भविष्यति ७ वसिष्ठेन सहामंत्र्य दीयतां यदि रोचते पप्रच्छ गुरुमेकांते राजा चिंतापरायणः ८ किं करोमि गुरो रामं त्यक्तुं नोत्सहते मनः बहुवर्षसहस्रांते कष्टेनोत्पादिताः सुताः ९ चत्वारोऽमरतुल्यास्ते तेषां रामोऽतिवल्लभः रामः परागच्छति चेन्न जीवामि कथंचन १० प्रत्याख्यातो यदि मुनिः शापं दास्यत्यसंशयं कथं श्रेयो भवेन्मह्यं असत्यं चापि न स्पृशेत् ११ वसिष्ठ उवाच शृणु राजन्देवगुह्यं गोपनीयं प्रयत्नतः रामो न मानुषो जातः परमात्मा सनातनः ११ भूमेर्भारावताराय ब्रह्मणा प्रार्थितः पुरा स एव जातो भगवान्कौशल्यायां तवानघ १२ त्वं तु प्रजापतिः पूर्वं कश्यपो ब्रह्मणः सुतः कौशल्या चादितिर्देवमाता पूर्वं यशस्विनी १३ भवंतौ तप उग्रं वै तपाते बहुवत्सरं सदा विष्णुपरौ विष्णुपूजाध्यानकतत्परौ १४ तदा प्रसन्नो भगवान्वरदो भक्तवत्सलः वृणीष्व वरमित्यु

न्बाललीलया रमयामासपितरौचेष्टितैर्मुग्धभाषितैः ४४ भालेस्वर्णमयाश्वत्थपर्णमुक्ता
फलप्रभं कंठेरत्नमयव्रातमध्यद्वीपिनखांचितं ४५ कर्णस्वर्णसंपन्नरत्नार्जुनसटालुकं
शिंजानमणिमंजीरकटिसूत्रांगदैर्युतं ४६ स्मितवक्त्राल्पदशनंइंद्रनीलमणिप्रभं अं
गणेरिंगमाणंतंवत्सकाननुसर्वतः ४७ दृष्ट्वादशरथोराजाकौसल्यामुमुदेतदा भोक्ष्यमा
णोदशरथोराममेहीतिचासकृत् ४८ आह्वयत्यतिहर्षेणप्रेम्णानायातिलीलया आन
येतिचकौशल्यामाहसस्मितःसुतं ४९ धावत्यपिनशक्नोतिस्प्रष्टुंयोगिमनोगतिं प्र
हसन्स्वयमायातिकर्दमांकितपाणिना किंचिद्गृहीत्वाकवलंपुनरेवपलायते एवमा
नंदसंदोहोजगदानंदकारकः ५१ मायाबालवपुर्धृत्वारमयामासदंपती अथकालेनते
सर्वेकौमारंप्रतिपेदिरे ५२ उपनीतावसिष्ठेनसर्वविद्याविशारदाः धनुर्वेदेचनिरताः।
सर्वशास्त्रार्थवेदिनः ५३ बभूवुर्जगतांनाथालीलयानररूपिणः लक्ष्मणस्तुसदाराम
मनुगच्छतिसादरं ५४ सेव्यसेवकभावेनशत्रुघ्नोभरतंतथा रामश्चापधरोनित्यंतूणी
बाणान्वितःप्रभुः ५५ अश्वारूढोवनंयातिमृगयायैसलक्ष्मणः हत्वादुष्टमृगान्सर्वान्पि
त्रेसर्वंन्यवेदयत् ५६ प्रातरुत्थायसस्नाः पितरावभिवाद्यच पौरकार्याणिसर्वाणिकरोति
विनयान्वितः ५७ बंधुभिःसहितोनित्यंभुक्त्वामुनिभिरन्वहं धर्मशास्त्ररहस्यानिशृणो
तिव्याकरोत्यपि ५८ एवंपरात्मामनुजावतारोमनुष्यलोकाननुसृत्यसर्वान् चक्रेवि
कारपरिणामहीनोविचार्यमाणोनकरोतिकिंचित् ५९ इतिश्रीमदध्यात्मरामायणेबा

नीरूपिरंवह ततोतिसुंदरी पत्नी सर्वाभरणभूषिता: ३० शापाद्विमुक्ता च तं शापमुक्ता राम
प्रसादतः नत्वा रामं परिक्रम्य गता रामाज्ञया दिवं ३१ ततोतिहृष्टः परिरभ्य रामं मंत्रज्ञान
माग्नाय विंचिंत्य किंचित् सर्वास्त्रजालं सह रस्यमंत्रं प्रीत्याभिरामाय ददौ सहृष्टः ३२ ।
इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे उत्तरखंडे बालकांडे ताडिकावधः चतु
र्थोऽध्यायः ४ श्रीमहादेव उवाच तत्र कामाश्रमे रम्ये कानने मुनिसंकुले १ उषित्वा रजनी
मेकां प्रभाते प्रस्थितः शनैः १ सिद्धाश्रमं गताः सर्वे सिद्धचारणसेवितं श्रीरामः कौशिकं प्रा
ह मुने दीक्षां प्रविश्यतां २ दर्शयस्व महाभाग कुतस्तौ राक्षसाधमौ तथेत्युक्त्वा मुनिर्यष्टु
मारेभे मुनिभिः सह ३ ऋत्वियस्तु कृतास्तेन सहस्राण्येकविंशतिः कुलीनाः संमिताः
सर्वे वेदशास्त्रार्थपारगाः ४ मध्याह्ने ददृशाते तौ राक्षसौ कामरूपिणौ मारीचश्च सुबा
हुश्च वर्षंतौ रुधिरास्थिनी ५ रामोपि धनुरादाय द्वौ बाणौ संदधे सुधीः आकर्णांतं स
मालृष्य विससर्जं तयोः पृथक् ६ तयोरेकस्तु मारीचं भ्रामयन् शतयोजनं पातयामा
स सजलधौ तद्द्भुतमिवाभवत् ७ द्वितीयोग्निमयो बाणः सुबाहुमजयद्रणात् अपरे ल
क्ष्मणेनाथ हतास्तदनुयायिनः ८ पुष्पवृष्टिं अकिरंदेवा राघवं सहलक्ष्मणं देवदुंदुभयो
नेदुस्तुष्टुवुः सिद्धचारणाः ९ विश्वामित्रस्तु संपूज्य पूजार्हं रघुनंदनं अंके निवेश्य चा

कालत्वंमेपुत्रभवामल १५ इतित्वयायाचितोसौभगवान्भूतभावनः तथेत्युक्त्वायपुत्रत्वेलोका
नांरामएवहि १६ शेषस्तुलक्ष्मणोराजन्राममेवान्वपद्यत जातौभरतशत्रुघ्नौशंखचक्रेगदा
भृतः १७ योगमायापिसीतेतिजाताजनकनंदिनी विश्वामित्रोपिरामाय तांयोजयितुमागतः
१८ एतद्गुह्यतमंराजन्नवक्तव्यंकदाचनः यतःप्रीतेनमनसापूजयित्वाथकौशिकं १९ प्रेष
यस्वरमानायरामंचसहलक्ष्मणं वसिष्ठेनैवमुक्तस्तुराजादशरथस्तदा २० कृतकृत्य
मिवात्मानंमेनेप्रमुदितान्तरः आहूयरामरामेतिलक्ष्मणेतिचसादरं २१ आलिंग्यमूर्द्ध
न्यवघ्रायकौशिकायसमर्पयन् ददर्शरामंसमहामुनिस्तदाजहर्षप्रेमाश्रुनसिंधुमग्नाः।
अचिंत्यज्ञानिविहचित्तायथास्थांत्तंचतथैवदृष्ट्वा २२ विश्वोतिहृष्टोभगवान्विश्वामित्रःप्र
तापवान् २२ आशीर्भिरभिनंद्याथराजातौरामलक्ष्मणौ गृहीत्वाचापतूणीरौबाणखड्ग
धरौययौ २३ किंचिद्देशमतिक्रम्यराममाहूयभक्तितः ददौबलांचातिबलांविद्येद्वेदेवनि
र्मिते २४ ययोर्ग्रहणमात्रेणक्षुत्क्षामादिनजायते ततउत्तीर्यगंगांतेताडकावनमागमन्
२५ विश्वामित्रस्तदाप्राहरामंसत्यपराक्रमं अत्रास्तिताडकानामराक्षसीकामरूपिणी २६
बाधतेलोकमखिलंजहितामविचारयन् तथेतिधनुरादायसगुणंरघुनंदनः टंकारम
करोत्तेनशब्देनापूरयान्वनं तच्छ्रुत्वासहसासताडकाघोररूपिणी क्रोधसंमूर्छितारामम
भिदुद्रावमेघवत् तामेकेनशरेणाशुताडयामासवक्षसि २८ पपातविपिनेघोरावमं

गौतमोब्रवीत् दुष्टे त्वंतिष्ठदुर्वृत्ते शिलायामाश्रमेमम २६ निराहारादिवारात्रंतपःपरममास्थि
ता आतपानिलवर्षादिसहिष्णुःपरमेश्वरं २७ ध्यायंतीराममेकाग्रमनसाहृदिसंस्थितं नाना
जंतुविहीनोयमाश्रमोमेभविष्यति २८ तदैवकृतपापात्वंरामसंस्पर्शभर्जितः परिक्रम्यनमस्कृ
त्यस्तुत्वारामाहिमोक्ष्यसे २९ पूर्ववन्ममशुश्रूषांकरिष्यसियथासुखं इत्युक्त्वागौतमःप्रा
गाद्धिमवंतंनगोत्तमं ३० तदाह्यहिल्याभूतानामदृश्याश्रमेशुभे तवपादरजःस्पर्शका
क्षतेपापनाशनं ३१ आस्तेद्यापिरघुश्रेष्ठतपोदुष्करमास्थिता पावयस्वमुनेभार्यामहि
ल्यांब्रह्मणस्सुतां ३२ इत्युक्त्वाराघवंहस्तेगृहीत्वामुनिपुंगवः दर्शयामासचाहिल्यामुग्रेणत
पसास्थितां ३३ रामःशिलापदास्पृष्ट्वातांचापश्यत्तपोधनां ननामराघवोहिल्यांरामोहमि
तिचाब्रवीत् ३४ ततोदृष्ट्वारघुश्रेष्ठंपीतकौशेयवाससं धनुर्बाणधरंरामंलक्ष्मणेनसमन्वितं।
३५ स्मितवक्त्रंपद्मनेत्रंश्रीवत्सांकितव-सं नीलमाणिक्यसंकाशंद्योतयंतंदशोदिश ३६
दृष्ट्वारामंरमानाथंहर्षविस्फुरितेक्षणा गौतमस्यवचःस्मृत्वाज्ञात्वानारायणंपरं ३७ संपूज्य
विधिवद्रामम अर्घ्यादिभिरनिंदिता हर्षाश्रुजलनेत्रांतादंडवत्प्रणिपत्यसा ३८ उत्थायचपुन
र्दृष्ट्वारामंराजीवलोचनं पुलकांकितसर्वांगागिरागद्गदयेडयत् ३९ अहिल्योवाच अहोकृ
तार्थास्मिजगन्निवासतेपादाब्जसंलग्नरजःकणेनहं स्पृशामियत्पद्मजशंकरादिभिर्विमृग्य
तेरुंधितमानसेसदा ४० अहोविचित्रंतवरामचेष्टितंमनुष्यभावेनविमोहयज्जगत् चलस्य

लिंग्यमन्तयावाब्याकुलेनतः १० भोजयित्वा सह भ्राता रामं पक्वफलादिभिः उवासवाकौर्मधु
रैर्न्निनायरविमच्चयं ११ चतुर्थेहनि संप्राप्ते कौशिको राममब्रवीत् रामराम महाबाहो गच्छ
मत्तेवयं १२ विदेहराजनगरे जनकस्य महात्मनः तत्र माहेश्वरं चापं मलिन्यस्तं पिनाकिना १३
द्रक्ष्यसित्वं महासत्वं पूज्यसेजनकेन च इत्युक्त्वा मुनिभिःसार्धं ययौ गंगामसमीपगं १४ गौत
मस्याश्रमे पुण्यं यत्राहिल्यास्थिता पुरा दिव्यपुष्पफलोपेतैः पादपैः परिवेष्टिते १५ मृगपक्षग
णैर्हीनं नानापक्षिविवर्जितं दृष्ट्वोवाच मुनिश्रीमान् रामो राजीवलोचनः १६ कस्यैतदाश्रम
पुण्यं भातिभास्वच्छुभं महत् पत्रपुष्पफलैर्युक्तं जंतुभिः परिवर्जितं १७ आह्लादयति मे चेतो भ
गवन् ब्रूहि तत्वतः विश्वामित्र उवाच शृणु राम पुराह्यत्र गौतमो लोकविश्रुतः सर्वधर्मभृतां श्रे
ष्ठस्तपसाराधयन् हरिं तस्मै ब्रह्मा ददौ कन्यामहिल्यां लोकसुंदरीं १९ ब्रह्मचर्येण संतुष्टः शुश्रू
षणपरायणां तयासार्द्धं मिहावात्सीद्गौतमस्तपतांवरः २० शक्रस्तु तां धर्षयितुमंतरं प्रेक्षयन्न
ह कदाचिन्मुनिवेषेण निर्गते गौतमे गृहात् २१ तांधर्षयित्वा निर्गीत त्वरितं मुनिरप्यगात्
दृष्ट्वायांतं स्वरूपेण मुनिः परमकोपितः २२ पप्रच्छ कस्त्वं दुष्टात्मन् मम रूपधरोऽधमः सत्यं ब्रूहि
नचेद्भस्म करिष्यामि न संशयः २३ सोब्रवीद्देवराजोहं पाहि मां देवकिंकरं कृतं जुगुप्सितं
कर्म मया कुत्सितचेतसा २४ गौतमः क्रोधताम्राक्षः शशाप द्रिदशाधिपं योनिलंपट दुष्टात्मन्
सहस्रभगवान्भव २५ शप्त्वा तं देवराजानं प्रविश्य स्वाश्रमं द्रुतं दृष्ट्वाहिल्यां वेपमानां प्रांजलिं

तस्मिन्काले नावकेन निषिद्धो रघुनंदनः नावकोवाच क्षालयामि तव पंकजं नाथ दारुदृषदोः किमंतरं मानुषीकरणचूर्णम-
स्तिते पादयोरितिकथाप्रथीयसी इत्युक्त्वा क्षालितौ पादौ परतीरे ततो गतः १०

श्री
१९

भवभयहरमेकं भानुकोटिप्रकाशं करधृतशरचापं कालमेघावभासं कनकरुचिरवस्त्रं रत्नवत्कुंड-
लाढ्यं कमलविशदनेत्रं सानुजं राममीडे स्तुत्वैवं पुरुषं साक्षाद्राघवं पुरतः स्थितं परिक्रम्य प्रणम्या-
शु सानुज्ञाता ययौ पतिं ५७ अहल्यया कृतं स्तोत्रं यः पठेद्भक्तिसंयुतः सशुच्यतेऽखिलैः पापैः परब्र-
ह्माधिगच्छति ५८ पुत्राद्यर्थे पठेद्भक्त्या रामं हृदि निधाय च संवत्सरेण लभते वंध्या यापि सुपुत्रकं ॥
५९ सर्वान्कामानवाप्नोति रामचंद्रप्रसादतः ६० ब्रह्मघ्नो गुरुतल्पगोपि पुरुषः स्तेयी सुरापोपि वा मा-
तृभ्रातृविहिंसकोपि सततं भोगैकबद्धातुरः नित्यं स्तोत्रमिदं जपन्रघुपतिं भक्त्या हृदिस्थं स्मरन्
ध्यायन्मुक्तिमुपैति किं पुनरसौ स्वाचारयुक्तो नरः ६१ इति श्रीमदध्यात्मरामायणे उमामहेश्व-
रसंवादे बालकांडे पंचमोऽध्यायः ५ श्रीमहादेव उवाच विश्वामित्रोऽथ तं प्राह राघवं सहलक्ष्मणं ग-
च्छामो द्रष्टुं मिथिलां जनकेनाभिपालितां १ दृष्ट्वा क्रतुवरं पश्चादयोध्यां गंतुमर्हसि इत्युक्त्वा प्रययौ गंगा-
तीरं मुनिः सह राघवः २ विदेहस्य पुरः प्राप्य ... विशत्मा याते कौशिकमाकर्ण्य जनकोऽति-
मुदान्वितः ३ पूजाद्रव्याणि संगृह्य सोपाध्यायः समाययौ दंडवत्प्रणिपत्याथ पूजयामास कौशिकं
४ पप्रच्छ राघवौ दृष्ट्वा सर्वलक्षणलक्षितौ द्योतयंतौ दिशः सर्वाश्चंद्रसूर्याविवापरौ कस्यैतौ नर-
शार्दूलौ पुत्रौ देववरोपमौ मम प्रीतिकरौ मे वनरनारायणाविव ६ तत्रोवाच मुनिः प्रीतो हर्ष-
यन् जनकं तदा पुत्रौ दशरथस्येतौ भ्रातरौ रामलक्ष्मणौ ७ मखसंरक्षणार्थाय मया नीतौ पितुः
पुरात् आगच्छन्नाथ वो मार्गे ताडकां विश्वघातिनीं ८ शरेणैकेन हतवान् ताडितो मे ति विक्रमः।
ततो मम आश्रमे गत्वा मम यज्ञविघातकान् ९ हत्वा ह सुबाहुं मारीचं सागरे क्षिप्तवान् ततो गंगात-
टे ऽहल्ये गौतमस्याश्रमे शुभे १० दृष्ट्वाहल्यां नमस्कृत्य तया सम्यक्प्रपूजितः पादाब्जरजःस्पर्श ॥

जस्त्वं चरणादिवर्जितः संपूर्णआनंदमयोतिमायिकः ४१ यत्पादपंकजपरागपवित्रदेहा भागी
रथी भवविरिंचिमुखान्पुनाति साक्षात्स एव मम दृग्विषये यदास्ते किं वर्ण्यते मम पुराभागधेयं
४२ मर्त्यावतारे मनुजाकृतिं हरिं रामाभिधेयं रमणीयदेहिनं धनुर्धरं पद्मविशाललोचनं भजा
मि नित्यं परमात्मतत्त्वं ४३ यत्पादपंकजरजः श्रुतिभिर्विमृग्यं यन्नाभिपंकजभवः कमलासना
श्च यन्नामसाररसिको भगवान्पुरारिस्तं रामचंद्रमनिशं हृदि भावयामि ४४ यस्यावतारचरिता
नि विरंचिलोके गायंति नारदमुखा भवपद्मजाद्याः आनंदजाश्रुपरिषिक्तकुचाग्रसीमा वागीश्व
री च तमहं शरणं प्रपद्ये ४५ सोयं परात्मा पुरुषः पुराण एकः स्वयंज्योतिरनंत आद्यः मायातनुं लो
कविमोहिनीं तां धत्ते परानुग्रह एव रामः ४६ अयं हि विश्वोद्भवसंयमानामेकः स्वमायागुणबि
बितो यः विरंचविष्ण्वीश्वरनामभेदान्धत्ते स्वतंत्रः परिपूर्णआत्मा ४६ नमोस्तु ते राम तवांघ्रि
पंकजं श्रिया धृतं वक्षसि लालितं प्रियं आक्रांतमेकेन जगत्त्रयं पुरा ध्येयं मुनींद्रैरभिमानवर्जितैः
४७ जगतामादिभूतस्त्वं जगत्त्वं जगदाश्रयः सर्वभूतेष्वसंसक्त एको भाति भवान्परः ४८ ॐकारवाच्य
स्त्वं राम वाचामविषयः पुमान् वाच्यवाचकभेदेन भवानेव जगन्मयः ४९ कार्यकारणकर्तृत्वफलसा
धनभेदतः एको विभासि राम त्वं मायया बहुरूपया ५० त्वन्मायामोहितधियस्त्वां न जानंति तत्त्वतः
मानुषं त्वाभिमन्यंते मायिनं परमेश्वरं ५१ आकाशवत्त्वं सर्वत्र बहिरंतर्गतोमल असंगो ह्यचलो नि
त्यः शुद्धो बुद्धः सदाव्ययः ५२ योषिन्मूढाहमज्ञा ते तत्त्वं जाने कथं विभो तस्मात्ते शतशो राम न
स्कुर्यामनन्यधीः ५३ देव मे यत्र कुत्रापि स्थिताया अपि सर्वदा त्वत्पादकमले सक्ता भक्तिरेव सदा
स्तु मे ५४ नमस्ते पुरुषाध्यक्ष नमस्ते भक्तवत्सल नमस्तेस्तु हृषीकेश नारायण नमोस्तु ते ५५

अ॰
१२

वैकुमारागांसदारः सहमंत्रिभिः ३२ तथेतिप्रेषयामासराजात्वरितविक्रमान् तेगत्वाराजशार्दूल
रामस्यैवान्यवेदयन् ३३ श्रुत्वारामकृतंराजाहर्षेणमहतावृतः मिथिलागमनायाशुत्वरयामा
ससमंत्रिणं ३३ गच्छन्तुमिथिलांसर्वेगजाश्वरथपत्तयः रथमानयमेशीघ्रंगमिष्याम्यद्यैवमाचिरं ३४।
वसिष्ठस्त्वग्रतोयातुसदारःसहितोग्निभिः राममातरमाराधयमुनिर्मेभगवान्गुरुः ३५ एवंप्रस्था
प्यसकलंराजर्षिर्विपुलंरथं महत्यासेनयासार्द्धंमारुत्वरितोययौ ३६ आगतंराघवंश्रुत्वा
राजाहर्षसमाकुलः प्रत्युज्जगामजनकः शतानन्दपुरोधसा ३७ यथोक्तपूजयामाससत्व
तंरामस्तुलक्ष्मणेनाभ्युववंदेचरणौपितुः ३८ ततोहृष्टोदशरथोरामंवचनमब्रवीत् दिष्ट्या
पश्यामितेराममुखंफुल्लांबुजोपमं ३९ मुनेरनुग्रहात्सर्वंसंपन्नंममशोभनं इत्युक्त्वालिंगयमू
र्ध्निमाघ्रायचपुनःपुनः ४० हर्षेणमहताविष्टोब्रह्मानंदंगतोयथा ततोजनकराजेनमंदि
रेसन्निवेशितः ४१ शोभनेसर्वभोगाढ्येसदारःसंस्थितःसुखी ततःशुभेदिनेलग्नेशुभमुहूर्ते
रघूत्तमे ४२ आनयामासधर्मज्ञःसभ्रातृपितृकंतदा रत्नस्तंभविस्तारेवितानेसतोरणे
४३ मंडपेसर्वशोभाढ्येमुक्ताजालसमाकुले दिव्यास्तरणसंवीतेस्वर्णपीठेरामंन्यवेशयत् ४४।
वसिष्ठंकौशिकंचैवशतानंदपुरोहितः यथाक्रमंपूजयित्वारामस्याभयपार्श्वयोः ४५ स्थापयि
त्वासनत्राग्निंज्वालयित्वायथाविधि सीतामानीयशोभाढ्यांनानारत्नविभूषितां ४६ सभार्योज
नकःप्रायाद्रामंराजीवलोचनं पादौप्रक्षाल्यविधिवत्तदापोमूर्ध्न्यवधारयत् ४७ याधृतामूर्ध्नि
शर्वेणब्रह्मणामुनिभिःसदा ततःसीताकरंधृत्वासाक्षतोदकपूर्वकं ४८ रामायप्रददौप्रीत्या
पाणिग्रहविधानतः सीताकमलपत्राक्षीस्वर्णमुक्तादिभूषिता ४९ दीयमानांतुतांप्रीतोऽभ १२

त्वा पिशाचाद्धि मोचिता ११ इदानीं द्रष्टुकामस्ते गृहे माहेश्वरं धनुः पूजितं राजभिः सर्वैः दृष्टुमिच्छ
त्यमुं कृषे १२ अयोध्याधिपराजेन्द्रसोयं चापमनुत्तमम् दृष्ट्वा बोधं गमिष्यति पितरं द्रष्टुमिच्छति १३
इत्युक्तो मुनिना राजा पूजार्हो विति पूजया पूजयामास धर्मज्ञो वेदिष्टेन कर्मणा १४ ततः सं
प्रेषयामास मन्त्रिणो बुद्धिसत्तमान् शीघ्रमानयत विश्वेशचापं रामाय दर्शये १५ ततो गतेषु सचिवे राजा
कौशिकमब्रवीत् यदि रामो धनुर्धृत्वा कोट्यामारोपयेद्गुणम् १६ तदा मयात्मजा सीता सीय
ते राघवाय हि तथेति कौशिको प्याह रामं सवीक्ष्य सस्मितं १७ शीघ्रं दर्शय चापाग्र्यं रामाया
मिततेजसे एवं ब्रुवति सो वीशाग्या गतास्तापवहकाः १८ चापं गृहीत्वा बलिनः पंच सहस्रसं
ख्यकाः घंटाशतसमायुक्तं मणिवज्रादिभूषितं १९ दर्शयामास रामाय मंत्री मंत्रवतां वरः द
ष्ट्वा महत्धात्मा परिकरं दृढं २० गृहीत्वा वामहस्तेन लीलया तोलयन्धनुः आरोपयामास गुणं
पश्यत्सु सकलराजसु २१ ईषदाकर्षयामास पाणिना दक्षिणेन सः मतिं चाखिलहृत्भारो दिशः
शब्देन पूरयन् २२ दिशश्च विदिशश्चैव स्वर्गमर्त्यरसातलं तदद्भुतमभूत्तत्र देवानां दिविपश्य
तां २४ आच्छादयं तत्कुशमैर्देवाः स्तुतिभिरीडिरे देवदुंदुभयो नेदुर्ननृतुश्चाप्सरोगणाः २५
द्विधाभग्नं धनुर्दृष्ट्वा राजालिंगत्सुदृढं विस्मयं लेभिरे सीता मातरो तं तदाजिरे २६ सीता स्वर्णम
यीं मालां गृहीत्वा दक्षिणे करे स्मितवक्त्रा स्वर्णवर्णा सर्वाभरणभूषिता २७ मुक्ताहारैः कर्णपत्रैः
क्वणच्चरणनूपुरा दुकूलोपरि संवीता वस्त्रान्तर्व्यंजितस्तनी २८ रामस्योपरि निक्षिप्य स्मयमाना
मुदं ययौ ततो मुमुदिरे सर्वे राजदाराः स्वलंकृताः २९ गवाक्षजालरंध्रेभ्यो दृष्ट्वा लोकविमोहि
नीं ततोऽब्रवीन्मुनिं राजा पत्रं प्रेषय सत्वरं ३० राजा दशरथः शीघ्रमागच्छतु सपुत्रकः विवाहा

अ॰
१३

यत्पादपंकजपरागपवित्रगात्रा भागीरथी भवभयं जितकालचक्रैः एतामकीर्त्तिनपरानतु: त्वशोकान्हे
बालमेवशरणंसततंप्रपद्ये ७० इतिप्रणम्यनृपः प्रादाद्यायचायमहात्मने दासादीनांकोटिशतं
रथानामयुतंतथा ७१ अश्वानांनियुतंप्रादाद्गजानामयुतंतथा पत्तीनांलक्षमेकंचदासीनां
त्रिशतंददौ ७२ दिव्यांबराणिहारांश्चमुक्तारत्नमयोज्ज्वलान् सीतायैजनकःप्रादात्प्रीत्यादुहि
तृवत्सलः ७३ वसिष्ठादीन्सुसंपूज्यभरतंलक्ष्मणंतथा पूजयित्वायथान्यायंतथादशरथंनृ
पं ७४ प्रस्थापयामासनृपोराजानंरघुसत्तमं सीतामालिंग्यरुदतीमातरःसाश्रुलोचनाः ७५
श्वश्रूशुश्रूषणपरानित्यंराममनुव्रता पातिव्रत्यमुपालम्ब्यातिष्ठवत्सेयथासुखं ७६ प्रयाणका
लेरघुनंदनस्यभेरीमृदंगमनकादितूर्यघोषाः स्वर्वादिभेरीघनतूर्यशब्दैःसंमूर्छितोभूत्तमयेक
लोभूत ७७ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेबालकांडेषष्ठोऽध्यायः ६ श्री:म:
अथगच्छतिश्रीरामेमैथिलाद्योजनत्रयं निमित्तान्यतिघोराणिददर्शनृपसत्तमः १ नत्वावसि
ष्ठंपप्रच्छकिमिदंमुनिपुंगव निमित्तानीहदृश्यंतेविषमाणिसमंततः २ वसिष्ठस्तमथाह
भयमागामिसूच्यते उपशममयंतेयशीघ्रमेवभविष्यति ३ मृगाःप्रदक्षिणंयांतित्वांपश्यशुभ
सूचकाः इत्येवंवदतस्तस्यववौघोरतरोनिलः ४ मुष्णंश्चक्षूंषिसर्वेषांपांसुवृष्टिभिरर्दयन् ।
ततोददर्शभगवान्जमदग्न्यःप्रतापवान् ५ नीलमेघनिभःप्रांशुर्जटामंडलमंडितः धनुःपर
शुपाणिश्चसाक्षात्कालइवांतकः ६ कार्त्तवीर्यांतकोरामोदृप्तक्षत्रियमर्दनः प्राप्तोदशरथस्या
ग्रेकालमृत्युरिवापरः ७ तंदृष्ट्वाभयसंत्रस्तोराजादशरथस्तदा अर्घ्यादिपूजांविस्मृत्यत्रा
हित्राहीतिचाब्रवीत ८ दंडवत्प्रणिपत्याहपुत्रप्राणान्प्रयच्छमे इतिब्रुवंतंराजानमनादृत्यरघू
त्तमं ९ उवाचानिष्ठुरंवाक्यंक्रोधात्प्रचलितेंद्रियः त्वंरामइतिनाम्नामेचरसिक्षत्रियाधम १०

१३

वरयस्व मे इति प्रीतेन मनसा सीतां रामकरेऽर्पयत् ५० सुमोह जनको लक्ष्मीं दीप्तिं चिव विस्मये उ
र्मिलां चौरसीं कन्यां लक्ष्मणाय ददौ तदा ५१ तथैव श्रुतिकीर्तिं च मालतीं भ्रातृकन्यके भरताय
शत्रुघ्नाय प्रसादवरो ददौ ५२ चत्वारो दारसंपन्नाः भ्रातरः शुभलक्षणाः विरेजुः प्रभया सर्वे लो
कपाला इव चापरे ५३ ततो ब्रवीन्मिथिलाधिप विश्वामित्राय मैथिलः जनकः स्वसुतां नारदेनाभिभा
षितं ५४ यज्ञभूमिविशुद्ध्यर्थं कृष्यतो लांगलेन मे सीतामुखात्समुत्पन्ना कन्यका शुभलक्षणा
५५ तां मया प्रीत्या पुत्रिका भवभाविता अर्पिता प्रियभार्येयं रघुवंशभानुना ५६ एकदा
नारदोऽभ्यागाद्विविक्ते मयि संस्थिते रणयन्महतीं वीणां गायन्नारायणं विभुं ५७ पूजितः स्व
मासीनो मामुवाच स्वस्त्यन्वितः शृणु वचनं गुह्यं तव अभ्युदयकारणं ५८ परमात्मा हृषीकेशो भ
क्तानुग्रहकाम्यया देवकार्यार्थसिद्ध्यर्थं रावणस्य वधाय च ५९ जातो राम इति ख्यातो मायामा
नुषवेषधृक् आस्ते दाशरथिर्भूत्वा चतुर्धा परमेश्वरः ६० योगमायापि सीतेति जाता वै तव वेश्म
नि अतस्त्वं राघवायैव देहि सीतां प्रयत्नतः ६१ नान्येभ्यः पूर्वभार्येषा रामस्य परमात्मनः इत्यु
क्त्वा प्रययौ देवगतिं देवमुनिस्तदा ६२ तदारभ्य मया सीता विष्णोर्लक्ष्मीर्विभाव्यते कथं मया राघ
वाय जानकी दीयते शुभा ६३ इति चिन्तासमाविष्टः कार्यमेकमचिन्तयन् मत्पितामहगेहे तु न्यासभू
तमिदं धनुः ६४ ईश्वरेण पुरा क्षिप्तं पुरदाहादनन्तरं धनुरेतत्पणं कार्यमिति चिन्ताकृतं तथा ६५ सीता
पाणिग्रहार्थाय सर्वेषां माननाशनं त्वत्प्रसादान्मुनिश्रेष्ठ रामो राजीवलोचनः ६६ आनीतोऽत्र धनुर्द्र
ष्टुं फलितो मे मनोरथः अद्य मे सफलं जन्म राम त्वां सह सीतया ६७ एकासनस्थं पश्यामि भ्राजमानं
रविं यथा त्वत्पादाम्बुजधरो ब्रह्मा सृष्टिचक्रप्रवर्तकः ६८ बलिस्त्वत्पादसलिलं धृत्वाभूद्दिविजा
धिपः त्वत्पादपांसुसंस्पर्शादहल्या भर्तृशापतः ६९ सद्य एव विनिर्मुक्ता कोन्यस्त्वत्तोऽधिकः शिवो ॥

यावन्मायावृता लोकास्तावत्त्वां न विजानते अविचारितसिद्धैषा विद्याविद्याविरोधिनी ३० अवि
द्याकृतदेहादिसंघाते प्रतिबिंबिता चिच्छक्तिर्जीवलोकेऽस्मिन्जीव इत्यभिधीयते ३१ याव
द्देहमनःप्राणबुद्ध्यादिष्वभिमानवान् तावत्कर्तृत्वभोक्तृत्वसुखदुःखादिभाग्भवेत् ३२
आत्मनः संसृतिर्नास्ति बुद्धेर्ज्ञानं न जात्विति अविवेकाद्द्वयं युंक्त्वा संसारीति प्रवर्तते ३३ जडस्य
चित्समायोगाच्चित्त्वं भूयाच्चितेस्तथा जडसंगाज्जडत्वं हि जलाग्न्योर्मेलनं यथा ३४ यावत्त्वत्पाद
भक्तानां संगसौख्यं न विंदति तावत्संसारदुःखौघान्न निवर्तेन्नरः सदा ३५ सत्संगलब्धया
भक्त्या यदा त्वां समुपासते तदा माया शनैर्याति ज्ञानं न प्रतिपद्यते ३६ ततस्तज्ज्ञानसंपन्नः
सद्गुरुस्तस्य लभ्यते वाक्यज्ञानं गुरोर्लब्ध्वा त्वत्प्रसादाद्विमुच्यते ३७ तस्मात्त्वद्भक्तिहीनानां क
ल्पकोटिशतैरपि न मुक्तिशंका विज्ञानशंका नैव सुखं तथा ३८ अतस्त्वत्पादयुगले भक्तिर्मे ज
न्मजन्मनि तस्मात्त्वद्भक्तिमतां संगोऽविद्या याभ्यां विनश्यति ३९ लोके त्वद्भक्तिनिरतास्त्व
द्धर्मामृतवर्षिणः पुनंति लोकमखिलं किं पुनः स्वकुलोद्भवान् ४० नमोऽस्तु जगतां नाथ नमस्ते
भक्तिभावन नमः कारुणिकानंत रामचंद्र नमोऽस्तु ते ४१ ततः प्रसन्नो भगवान् श्रीरामः करु
णामयः प्रसन्नोऽस्मि तव ब्रह्मन्यत्ते मनसि वर्तते ४२ दास्ये तदखिलं कामं मा कुरुष्वात्र संश
ये ततः प्रीतेन मनसा भार्गवो राममब्रवीत् ४३ यदि मेऽनुग्रहो राम तवास्ति मधुसूदन त्वद्भक्तसं
गस्त्वत्पादे दृढा भक्तिः सदास्तु मे ४४ इतिमेतत्पठेद्यस्तु भक्तिहीनोऽपि सर्वदा त्वद्भक्तिस्तस्य वि
ज्ञानं भूयादंते स्मृतिस्तव ४५ तथेति राघवेणोक्तः परिक्रम्य प्रणम्य तं पूजितस्तदनुज्ञातो महें
द्राचलमन्वगात् ४६ राजा दशरथो हृष्टो रामं मृतमिवागतं आलिंग्यालिंग्य हर्षेण नेत्राभ्यां

दं दृष्टं प्रयच्छाम्यहं यदि त्वं क्षत्रियोऽसि मे पुराणं जर्जरं चापं भंक्त्वा त्वं कत्थसे मुधा ११ इदं तु वैष्णवं चाप
मारोपयसि चेद्गुणं तदा युद्धं त्वया सार्धं करोमि रघुवंशज: १२ न चेत्सर्वान्निहनिष्यामि क्षत्रियांत
करो ह्यहं इति ब्रुवति वै तस्मिंश्चचाल वसुधा भृशं १३ अंधकारो बभूवाथ सर्वेषामपि चक्षुषां रामो दा
शरथीर्वीरो वीक्ष्य तं भार्गवं रुषा १४ धनुराच्छिद्य तद्धस्तादारोप्य गुणमंजसा तूणीराद्बाणमादाय संधा
य कृष्य वीर्यवान् १५ उवाच भार्गवं रामं शृणु ब्रह्मन्वचो मम: शीघ्रं दर्शय बाणस्य यो राम सायक:
१६ लोकान्पादयुगं वापि वद शीघ्रं ममाज्ञया एवं वदति श्रीरामे भार्गवो विकृतानन: १७ संस्मर
न्पूर्ववृत्तांतं इदं वचनमब्रवीत् राम राम महाबाहो जाने त्वां परमेश्वरं १८ पुराणपुरुषं विष्णुं ज
गत्सर्गलयोद्भवं बाल्येऽहं तपसा विष्णुमाराधयितुमंजसा १९ चक्रतीर्थं शुभं गत्वा तपसा विष्णु
मन्वहं अतोषयन्महात्मानं नारायणमनन्यधी: २० तत: प्रसन्नो देवेश: शंखचक्रगदाध
र: उवाच मां रघुश्रेष्ठ प्रसन्नमुखपंकज: २१ श्रीभगवानुवाच उत्तिष्ठ तपसो ब्रह्मन्फलि
तं ते तपो महत् मच्चिदंशेन युक्तस्त्वं जहि हैहयपुंगवं २२ कार्तवीर्यं पितृहणं यदर्थं ते तप:
श्रम: ततस्त्रि:सप्तकृत्वस्त्वं हत्वा क्षत्रियमंडलं २३ सर्वां भूमिं कश्यपाय दत्त्वा शांतिमुपावह
त्रेतामुखे दाशरथिर्भूत्वा रामोऽहमव्यय: २४ उत्पत्स्ये परया शक्त्या तदा द्रक्ष्यसि मां तत: मत्तेज:
पुनरादास्ये त्वयि दत्तं मया पुरा तदा तपश्चरंल्लोके तिष्ठ त्वं ब्रह्मणो दिनं इत्युक्त्वांतर्दधे देवस्त
था सर्वं कृतं मया २६ अद्य मे सफलं जन्म प्रतीतोऽसि मम प्रभो ब्रह्मादिभिरलभ्यस्त्वं प्रकृते: प
रगोत्तम: २७ त्वयि जन्मादिषड्भावा न संत्यज्ञानसंभवा: निर्विकारोऽसि पूर्णस्त्वं गमनादिविवर्जि
त: २८ यथा जले फेनजालो धूमो वह्नौ तथा त्वयि त्वदाधारा त्वद्विषया माया कार्यं सृजत्यहो २९

अ०
१५

ओम् श्रीमहादेव उवाच एकदा हरकमासीनं राममेकांतः उपाजिरे सर्वाभरणसंपन्नरत्नसिंहासने।
स्थितं नीलोत्पलदलश्यामं कौस्तुभामुक्तकंधरं सीतया रत्नदंडेन चामरेणाथ वीजितं विनोदयं
तं तांबूलचर्वणादिभिरादरात् नारदो वतरद्धुमंबराद्द्रष्टुं राघवं शुद्धस्फटिकसंकाशः
शरच्चंद्र इवामलः अतर्कितमुपायातो नारदो दिव्यदर्शनः तं दृष्ट्वा सहसोत्थाय रामः प्रीत्या कृतां
जलिः ननाम शिरसा भूमौ सीतया सह भक्तिमान् उवाच नारदं रामः प्रीत्या परमया युतः संसारिणां
मुनिश्रेष्ठ दुर्लभं तव दर्शनं अस्माकं विषयाशक्तचेतसां नितरां मुने अवाप्तं मे पूर्वजन्मकृतेन पुण्यम
हार्दयं संसारिणामिह मुने लभ्यते सत्समागमः अतस्त्वद्दर्शनादेव कृतार्थोस्मि मुनीश्वर किं कार्यं ते
त्वया कार्यं ब्रूहि तत्करवाणि भो अथ तं नारदोप्याह राघवं भक्तवत्सलं किं मोहयसि मां राम वाक्यैर्लो
कानुसारिभिः संसारयहमितिप्रोक्तं सत्यमेव त्वयोदितं जगतामादिभूता या सा माया गृहिणी तव
त्वत्सन्निकर्षाज्जायंते तस्यां ब्रह्मादयः प्रजाः त्वदाश्रया सदा भाति माया या त्रिगुणात्मिकाः सूतेज
स्रं शुक्लकृष्णलोहिताः सर्वदा प्रजाः लोकत्रयमहागेहे गृहस्थस्त्वमुदाहृतः त्वं विष्णुर्जानकी ल
क्ष्मीः शिवस्त्वं जानकी शिवा ब्रह्मा त्वं जानकी वाणी सूर्यस्त्वं जानकी प्रभा भवान् शशांकः सीता तु रोहि
णी शुभलक्षणा शक्रस्त्वमेव पौलोमी सीता स्वाहानलो भवान् यमस्त्वं कालरूपश्च सीता संयमनी प्र
भो निर्ऋतिस्त्वं जगन्नाथ तामसी जानकी शुभा रामत्वमेव वरुणो भार्गवी जानकी शुभा वायुस्त्वं राम सी
ता तु सदागतिरितीरिता कुबेरस्त्वं राम सीता सर्वसंपत्प्रकीर्तिता रुद्राणी जानकी प्रोक्ता रुद्रस्त्वं लोक
नाशकृत् लोके स्त्रीवाचकं यावत्तत्सर्वं जानकी शुभा पुन्नामवाचकं यावत्तत्सर्वं त्वं हि राघव तस्मा
ल्लोकत्रये देव युवाभ्यां नास्ति किंचन त्वदाभासोदिता ज्ञानमव्याकृतमितीर्यते तस्मान्महत
ततः सूत्रं लिंगं सर्वात्मकं ततः अहंकारश्च बुद्धिश्च पंचप्राणेंद्रियाणि च लिंगमित्युच्यते प्राज्ञै

जलमुत्सृजेन् ततः प्रीतेन मनसा स्वस्थचित्ताः श्वरंययो रामलक्ष्मणशत्रुघ्नभरता देवसंमिता ४८
स्वां स्वां भार्यामुपादाय रेमिरे स्वस्वमंदिरे मातापितृभ्यां संहृष्टो रामः सीतासमन्वितः ४९ रेमे
वैकुंठभवने श्रिया सहयया हरिः युधाजिन्नाम कैकेयी भ्राता भरत मातुलः ५० भरतं नेतुमा
गत्य तत्र राज्ञा प्रीतिसंयुतः प्रेषयामास भरतं राजा स्नेहसमन्वितः ५१ शत्रुघ्नं चापि संपूज्य युधाजि
तमरिंदमः कौशल्या सुशुभे देवी रामेण सह सीतया ५२ देवमातेव पौलोम्या शच्या शक्रेण शो
भिना साकेते लोकनाथः प्रथितगुणगणो लोकसंगीतकीर्त्तिः श्रीरामः सीतयास्तेखिलहृदनि
कारानंदसंदोहमूर्त्तिः नित्यश्री निर्विकारो निरवधिविभवो नित्यमायानिरासो मायाकार्यानुसारी
मनुज इव सदा भाति देवोखिलेशः ५४ इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे
बालकांडे नाम सप्तमोऽध्यायः ७ वह्निषट्वनोऽष्टाः षष्ट्युत्तरत्रिशतश्लोका मोदमश्नान्त्यणोस्तु
समाप्तोयं बालकांडः श्रीरामाय नमः शुभम्

अ॰
१९

योनित्यं मुनिना रदरामयोः समन्त्राहि सा भोक्ष्यमस्मद्दुर्लभं विमोहे के वक्ता शृऽरः सक्रमेण इति श्रीम
द्ध्यात्मरामायणे उमामहेश्वरसंवादे अयोध्याकांडे प्रथमोऽध्यायः १ सूत उवाच अथ राजा दशरथः
कदाचिद्रहसि स्थितः वसिष्ठं स्वकुलाचार्यमाहूयेदमभाषत दशरथ उवाच भगवन्रामम खि
लाः संसंति मुहुर्मुहुः पौराश्च नैगमा वृद्धा मंत्रिणश्च विशेषतः पौरा ऊचुः सो राजन्सर्वज्ञ
त्वत्त सर्वशास्त्रविशारद सर्वेषां नः प्रीतिकरं रामं राज्येऽभिषेचयेत् ततः सर्वगुणोपेतं रामं राजीव
लोचनं ज्येष्ठं राज्येऽभिषेक्ष्यामि वृद्धोहं मुनिपुंगव भरतो मातुलं द्रष्टुं गतः शत्रुघ्नसंयुत अभिषिच्योरा
वास्तु भवांस्तत्रानुमोदिते संभारान्संभ्रियतां च गच्छ मंत्रय राघवं उत्पाद्यन्तां पताकाश्च नानावर्णाः स्व
मं ततः तोरणानि विचित्राणि स्वर्णमुक्तामयानि वै आहूय मंत्रिणं राजा सुमंत्रं मंत्रिसत्तमं अत्राप
यति यत्त्वां मुनिस्तत्तन्मानय यौवराज्येऽभिषेक्ष्यामि श्वोभूते रघुनंदनं तथेति हर्षात्स मुनिं किं
करोमीत्यभाषत तमुवाच महातेजा वशिष्ठो मुनिनां वरः वशिष्ठ उवाच श्वः प्रभाते मध्यकक्षे क
न्यकाः स्वर्णभूषिताः तिष्ठंतु षोडश गजाः स्वर्णरत्नादिभूषिताः चतुर्दंत ऐरावतकुलो
द्भवः नानातीर्थोदकैः पूर्णाः स्वर्णकुंभाः सहस्रशः स्थाप्यंतां तत्र वै व्याघ्रचर्माणि त्रीणि चानय
श्वेतच्छत्रं रत्नदंडं मुक्तामणिविराजितं दिव्यमाल्यानि वस्त्राणि दिव्यान्याभरणानि च मुनयः स
त्कृतास्तत्र तिष्ठंतु कुशपाणयः नर्तक्यो वारमुख्याश्च गायका वेणुकास्तथा नानावादित्रकुश
ला वादयंतु नृपांगणे हस्त्यश्वरथपत्तयः बहिस्तिष्ठंतु सायुधाः नगरे यानि तिष्ठंति देवतायतना
नि च तेष्वप्रवर्त्ततां पूजा नानाबलिभिरावृताः राजानः शीघ्रमायांतु नानोपायनपाणयः इत्या

जन्ममृत्युसुखादीनि ते स एव जीवसंज्ञश्च लोके भाति जगन्मयः आत्मा आनाद्यविद्यैव कारणोपाधिरुच्य
ते स्थूलं सूक्ष्मं कारणं चात्मासुवासितं यंच वनै एतैः विशिष्टो जीवः स्याद्वियुक्तः परमेश्वरः जाग्रत्स्व
प्नसुषुप्त्याख्या संसृतिर्या प्रवर्तते तस्या विलक्षणः साक्षी चिन्मात्रस्त्वं रघूत्तमः त्वत्तः एव जगज्जातं
त्वयि सर्वं प्रतिष्ठितं त्वय्येव लीयते कृत्स्नं तस्मात्त्वं सर्वकारणं रज्जावहिमिवात्मानं जीवो ज्ञात्वा भयं
वहेत् परात्माहमिति ज्ञात्वा भयदुःखैर्विमुच्यते चिन्मात्रज्योतिषा सर्वाः सर्वदेहेषु बुद्धयः ॥
त्वया यस्मात्प्रकाश्यंते सर्वस्यात्मा ततो भवान् अज्ञानान्न्यस्यते सर्वं त्वयि रज्जौ भुजंगवत् त्वज्ज्ञाना
ल्लीयते सर्वं तस्मात् ज्ञानं सदाभ्यसेत् त्वत्पादभक्तियुक्तानां विज्ञानं भवति क्रमात् तस्मात्त्वद्भक्तियु
क्ता ये मुक्तिभाजस्त एव हि अहं त्वद्भक्तभक्तानां तद्भक्तानां च किंकरः अतो मामनुगृह्णीष्व मोहय
स्व न मां प्रभो त्वन्नाभिकमलोत्पन्नो ब्रह्मा मे जनकः प्रभो अतस्तवाहं पौत्रोऽस्मि भक्तं मां पाहि राघव
इत्युक्त्वा बहुशो नत्वा स्वानंदाश्रुपरिप्लुतः उवाच वचनं रामं ब्रह्मणा चोदितोऽस्म्यहं रावणस्य व
धार्थाय जातोऽसि रघुसत्तमः इदानीं राज्यरक्षार्थं पिता त्वामभिषेक्ष्यति यदि राज्याभिषिक्तस्त्वं राव
णं न हनिष्यति प्रतिज्ञा ते कृता राम भूभारहरणाय वै तत्सत्यं कुरु राजेंद्र सत्यसंधस्त्वमेव हि श्रुत्वै
तदुदितं रामो मुनीं नां प्राह सस्मितं श्रीराम उवाच शृणु नारद मे किंचिद्विद्यते विदितं क्वचित्
प्रतिज्ञातं च यत्सर्वं करिष्ये तन्न संशयः किंतु कालानुरोधेन तत्तत्प्रारब्धसंक्षयात् हनिष्ये सर्वभू
भारं क्रमेणासुरमंडलं रावणस्य विनाशार्थं श्वो गंता दंडकाननं चतुर्दशसमास्तत्र ह्युषित्वा मुनिवे
षधृक् सीतामिषेण तं दुष्टं सकुलं नाशयाम्यहं एवं रामे प्रतिज्ञाते नारदः प्रमुमोद ह प्रदक्षिणत्र
यं कृत्वा दंडवत्प्रणिपत्य तं अनुज्ञातश्च रामेण ययौ देवगतिर्मुनिः संवादं पठति शृणोति संस्मरेद्वा

निमित्तमात्र एवाहं कर्त्ता भोक्ता त्वमेव हि मम त्वं हि वह्निः प्राणो नात्र कार्या विचारणा ततो वसिष्ठेन
यथा भाषितं तत्तथाकरोत् वसिष्ठोपि नृपं गत्वा कृतं सर्वं न्यवेदयत् वसिष्ठ उवाच राजन्मया कृतं
सर्वं यद्यदुक्तं त्वया मम अभिषेचनकं सर्वं प्रोक्तं तं रघुनायके वसिष्ठस्य गुरोराज्ञस्तु के रामाभिषेच
न यदा तद्दिनं नगरे श्रुत्वा कश्चित्सुमान् जगौ कौशल्यायै राममात्रे सुमित्रायै तथैव च श्रुत्वा ते हर्षसंपू
र्णे ददतुर्हारमुत्तमं तस्मै ततः प्रीतमना कौशल्या पुत्रवत्सला लक्ष्मीं पर्यचरद्देवी रामस्यार्थसि
द्धये सत्यवादी दशरथः करोत्येव प्रतिश्रुतं कैकेयीवशगः किंतु कामुकः किं करिष्यति इति व्याकुलि
तात्मा न दुर्गां देवीमपूजयत् एतस्मिन्नंतरे देवा देवीं वाणीमचोदयन् गच्छ देवि भुवो लोके अयोध्या
यां प्रयत्नतः रामाभिषेकविघ्नार्थं यतस्व ब्रह्मवाक्यतः मंथरां प्रविश्य पश्चात्ततो कैकेयीं च ततः परं ततो वि
घ्ने समुत्पन्ने पुनरेहि दिवं शुभे तथेत्युक्ता तथा चक्रे प्रविवेशाथ मंथरां सापि कुब्जा त्रिवक्रा तु प्रासा
दाग्रमथारुहत् नगरं परितो दृष्ट्वा सर्वतः समलंकृतं नानातोरणसंबाधं पताकाभिरलंकृतं स
र्वोत्सवसमायुक्तं विस्मिता पुनरागमत् मंथरा उवाच धात्रीं च पप्रच्छ जनः किं नगरं समलंकृतं ।
नानोत्सवसमायुक्ता कौशल्या चातिहर्षिता ददाति विप्रमुख्येभ्यो वस्त्राणि विविधानि च तामुवाच त
दा धात्री रामचंद्राभिषेचनं श्वो भविष्यति तेनायं सर्वतोलंकृता पुरी तच्छ्रुत्वा त्वरितागत्या कैकेयीं वाक्य
मब्रवीत् पर्यंकस्थां विशालाक्षीमेकांते पर्यवस्थिता किं शेषे दुर्भगे मूढे महद्भयमुपस्थितं न जानी
षे तिसौंदर्यमानिनी मत्तगामिनी रामस्य राज्ञोनुग्रहाद्धाभिषेको भविष्यति तच्छ्रुत्वा सहसोत्थाय कैके
यी प्रियवादिनी तस्यै ददौ दिव्यं स्वर्णनूपुरं रत्नभूषितं हर्षस्थाने किमिति मे कथ्यते भयमागतं भरता
दधिको रामः प्रियकृन्मे प्रियंवदः कौशल्यां मां समं पश्यन् सदा शुश्रूषते हि मां रामाद्भयं किमापन्नं
तव मूढे वदस्व मे तच्छ्रुत्वा विषसादाथ कुब्जा कारणवैरिणी शृणु मद्वचनं देवि यथा ज्ञातं महद्भयं।

दिशए मुनिः श्रीमान्स्तु मेनं तपसे दिशो स्वयं जगामाभि भवनं राघवस्यातिभास्वरं रथमारुह्य भगवान्वशि
ष्ठो मुनिसत्तमः त्रीणि कक्ष्याण्यतिक्रम्य रथात्क्षितिमवतरत् अंतः प्रविश्य भगवान्स्वाचार्यत्वाद
वारितः गुरुमागतमाज्ञाय रामस्तूर्णं कृतांजलिः प्रत्युद्गम्य नमस्कृत्य दंडवद्भक्तिसंयुतः स्वर्णपात्रे
णपानीयमानिनाय च जानकी रत्नासने समावेश्य पादौ प्रक्षाल्य भक्तितः तदपः शिरसा धृत्वा
सीतया सह राघवः धन्योस्मीत्यब्रवीद्राम तव पादांबुधारणात् श्रीरामेणैवमुक्तस्तु प्रहसन्मुनिर
ब्रवीत् त्वत्पादसलिलं धृत्वा धन्योभूद्गिरिजापतिः ब्रह्मापि मत्पिता तेहि पादतीर्थहृताशुभः इदानीं
भाषसे यत्त्वं लोकानामुपदेशकृत् जानामि त्वां परमात्मानं लक्ष्म्या संजातमीश्वरं देवकार्यार्थसि
द्ध्यर्थं भक्तानां भक्तिसिद्धये रावणस्य वधार्थाय जातं जानामि राघव तथापि देवकार्यार्थं गुह्यं नोद्घाट
याम्यहं यथा त्वं मायया सर्वं करोषि रघुनंदन तथैवानुविधास्येहं शिष्यस्त्वं गुरुरप्यहं गुरुर्गुरूणां
त्वं देव पितॄणां त्वं पितामहः अंतर्यामी जगद्यात्रावाहकस्त्वमगोचरः शुद्धसत्वमयं देहं धृत्वा स्वा
धीनसंभवः मनुष्य इव लोकेस्मिन् भासि त्वं योगमायया पौरोहित्यमहं जाने विगर्ह्यं दूष्यजीव
नं इक्ष्वाकूणां कुले रामः परमात्मा जनिष्यते इति ज्ञातं मया पूर्वं ब्रह्मणा कथितं पुरा ततोहमाशया
राम तव संबंधकांक्षया अकार्षं गर्हितमपि तवाचार्यत्वसिद्धये ततो मनोरथो मेद्य फलितो रघुनंदन
त्वदधीना महामाया सर्वलोकैकमोहिनी मां यथा मोहयेन्नैव तथा कुरु रघूद्वह गुरुनिष्कृतिका
मस्त्वं यदि देह्येतद्देव मे प्रसंगात्सर्वमप्युक्तं न वाच्यं कुत्रचिन्मया राज्ञा दशरथेनाहं प्रेषितोस्मि र
घूद्वह त्वामामंत्रयितुं राज्ये श्वोभिषेक्ष्यति राघव अद्य त्वं सीतया सार्द्धमुपवासं यथाविधि कृत्वा शुचि
र्भूमिशायी भव राम जितेंद्रियः गच्छामि राजसान्निध्यं त्वं तु प्रातर्गमिष्यसि इत्युक्त्वा रथमारुह्य यया
राजगुरुर्गते रामोपि लक्ष्मणं दृष्ट्वा प्रहसन्निदमब्रवीत् सौमित्रे यौवराज्ये मेऽभिषेको भविष्यति।

अ॰ १८

वरधारिणी सोवाच प्रणमेकुर्वे यावद्रामो वनं व्रजेत् प्राणांस्त्यक्ष्ये यथावत्ते प्राथितेनावरैर्हि निश्चयं कुरु
कल्याणी कल्याणं ते भविष्यति इत्युक्त्वा मंथरा कुब्जा गृहे माषितं था करोत् धीरा त्वं तद्यान्तिनो ब्रगुण
चारान्वितो वायवा नीतिनो विविधा रुदे शाकपरीविद्यादि बेकोपदा दुष्टानामति पापत्तथियां संसो
सराचेद्भवेत् नद्भुद्यापरिमो विनाव्रजति तन्मार्थं क्रमेणस्फुट इति श्रीमदध्यात्मरामायणे उ
मामहेश्वरसंवादे अयोध्याकांडे द्वितीयोऽध्यायः २ सूत उवाच अथ मंत्रिणमाहूय राजा दशर
थोऽब्रवीत् रामस्याभ्युदयार्थं हि वशिष्ठेनोक्तवान्यव तत्पार्श्वमागा विलंबं कथा विभो ततो राजा
दशरथो रामाभ्युदयकारणात् आदिश्य मंत्रिप्रकृतीः स्नानं दोगृहमाविशत् तत्र दृष्ट्वा प्रियं राजा कि
मेतदिति विकलः यापुरा मंदिरं तस्याः प्रविष्टो मापि शोभिना हसंती मामुपायाती सा किं नेवात्र दृश्य
ते इत्यालभ्येव संचिंत्य मनसाति विदूयिता पप्रच्छ दासी निकरं क्वते वः स्वामिनी शुभा नायाति
मां यथापूर्वं मत्प्रिय प्रियदर्शिना तामूचुः क्रोधभवनं प्रविष्टा नैव विद्महे कारणं तत्र देव त्वं गत्वा नि
श्चेतुमर्हसि इत्युक्ता भयसंत्रस्तो राजा तस्याः समीपगः उपविश्य शनैर्देहं विमृश्य पाणिनाब्रवीत्
राजोवाच — किं शेषे वसुधापृष्ठे पर्यंकादीन्विहाय च मां त्वं खेदयसे भीरु यतो मां नाभिभाषसे अलं
कारं परित्यज्य कस्मात् मलिनवाससा किमर्थं ब्रूहि सकलं विधास्ये तव वांछितं को वा तवाहितं कर्त्ता ना
री वा पुरुषोपि वा स मे दंड्यश्च वध्यश्च भविष्यति न संशयः ब्रूहि देवि यतो भीतिः तव तद्रूपमाग्रतः त
दानीं साधयिष्ये दुर्लभं मम पितल्वाणात् जानासि किल सारं मे विद्धि मां तव शेखिते तथापि मां
विरयसे हयानव परिश्रमाः ब्रूहि त्वं धनिनं कृत्वा दरिद्रं ते प्रियंकरं धनिनं क्षणमात्रेण निर्धनं तव चा
हितं ब्रूहि किं वा वधिर्वध्यार्हं वा विमोक्ष्ये किमत्र बहुनोक्तेन प्राणान् दास्यामि ते प्रिये मम प्राणान्मि

त्वांतोषयन्सदाराजाप्रियवाक्यानिभाषते कौतुकेनत्वयावारीचत्वांवाचापरितोषयन् कार्यंकरोतिक
रोतितस्यावैराममातुःहृष्टकालंमनस्येतान्निधायैवप्रेषयामासतेकृत्तंभरतंमातुलकुलंप्रेषयामा
ससानुजं सुमित्रायासमीचीनंभविष्यतिनसंशयः लक्ष्मणोराममन्वेतिराज्यंसोनुभविष्यति ॥
भरतोराघवस्याग्रेकिंकरोवाभविष्यति विवास्यतेवानगरात्प्राणैर्वाहीयतेचिरात् त्वंतुदासीवकौश
ल्यांनित्यंप्रचरिष्यसि ततोपिमरणंश्रेयोयत्सपत्न्याःपराभवः अतःशीघ्रंयतस्वाद्यभरतस्याभिषे
चनेरामस्यवनवासार्थंवर्षाणिनवपंचच ततोरूढोभवेत्पुत्रस्तवराज्ञिभविष्यति उपायंतेप्रवक्ष्या
मिपूर्वमेवविनिश्चितं पुरादेवासुरेयुद्धे राजादशरथःस्वयं इन्द्रेणयाचितोधन्वीसहायार्थंमहारथः
जगामसेनयासार्द्धंत्वयासहशुभानने युद्धंप्रकुर्वतस्तस्यशत्रुभिःसहधन्विनः तदात्तकीलोन्य
पतच्छिन्नस्तस्यनवेगतः त्वंमुहूर्त्तंसमाविश्यकीलरंध्रेप्रतिष्ठितैः स्थितवत्यसितापांगीपतिप्राणपरी
प्सया ततोहत्वासुरान्सर्वान्दृष्ट्वात्वांमहारिंदमः आश्चर्यंपरमंलेभेत्वामालिंग्यमुदान्वितः वृणीष्व
त्वंमनसिवांछितंवरदोस्म्यहं वरद्वयंवृणीष्वत्वमेवराज्ञिददाम्यपि त्वयोक्तोवरदोराजन्यदिदत्तं
वरद्वयंत्वय्येवतिष्ठतुचिरंन्यासभूतंममानघ यदामेवरदोराजन्भूयाद्दत्तादिहिवरद्वयं तथेत्युक्त्वाग
योराजामन्दिरंतवसुव्रते तन्नरवृषभात्तत्सर्वमिदानींस्मृतिमागतं अतःशीघ्रंप्रविश्याशुक्रोधागारंरु
षान्विता विमुच्यसर्वाभरणंसर्वतोविनिकीर्यच भूमावेवशयानात्वंतूष्णीमातिष्ठभामिनि यावदेत्य
त्यप्रतिज्ञायराजाभीष्टंकरोतिते श्रुत्वात्रिवक्रयोक्तं ततःसाकैकेयनंदिनी तथ्यमेवाखिलंमेनेदुःसं
गाहितविभ्रमाः तामाहकैकेयीहृष्टाकुब्जेत्वंबुद्धिरीदृशी एवंत्वांबुद्धिसंपन्नांनजानेवक्रकेहंहि
भरतोयदिराजामेभविष्यतिसुतःप्रियः ग्रामान्शतंप्रदास्यामिममत्वंप्राणवल्लभा इत्युक्त्वाको
पभवनंप्रविश्यसहसारुषा विमुच्यसर्वाभरणंपरिकीर्यसमंततः भूमौशयानारुष्टाचसाल्लिलो

अ०
१५

तुंबरोनोगायकाजगुः निवारयित्वातान्सर्वान्कैकेयीरोषमास्थिता ततः प्रभातसमये मध्यकक्ष्यमुपस्थिताः।
ब्राह्मणाः क्षत्रियावैश्याश्चैरघुयः कन्यकास्तथा कुंजराश्चामरंस्वर्णंगजोवाजिस्तथैवच अन्येचवरमुख्याश्च
पौराजानपदास्तथा वसिष्ठेनयथाज्ञप्तंतत्सर्वंतत्रसंस्थितं द्वितीयावालसूर्यस्तुल्याम्बरोचोनिर्मलेमिते
करःहस्तामहेतमेपीतकौशेयवाससे सर्वाभरणसंपन्नेकिरीटकटकोज्वले कौस्तुभाभरणश्यामेक
दर्पशतसुंदरे अभिषिक्तेसमायातेगजारूढस्मितानने श्वेतच्छत्रधरेतत्रलक्ष्मणेलक्ष्मणान्विते रा
मेकदाचापश्यामामाश्रमार्तेवाकदाभवेत् इत्युत्सुकधियः सर्वेवभूवुःपुरवासिनः नेदानीमुत्थितोरा
जाकिमर्थंचेतिचिंतयन् सुमंत्रः शनकैः प्रायाद्यत्रराजाव्यतिष्ठते वर्द्धयन्जयशब्देन प्रणमन्शिरसा
न्वयं अतिखिन्नंनृपंदृष्ट्वाकैकेयींसमपृच्छत सुमंत्रउवाच देविकैकेयिवर्द्धस्वकिंराजादृश्यते
न्यथा विकारवानिवाभाति अत्यन्तमस्वस्थइवलक्ष्यते तमाहकैकेयीराजा रात्रौनिद्रांनलब्धवान् रामरामे
तिरामेतिराममेवानुचिंतयन् प्रजागरस्ततोराजाप्यस्वस्थइवलक्ष्यते राममानयशीघ्रंत्वंराजाद्र
ष्टुमिहेच्छति सुमंत्रउवाच अश्रुत्वाराजवचनंकथंगच्छामिभामिनि तच्छ्रुत्वामंत्रिणोवाक्यंराजामंत्रि
णमब्रवीत् सुमंत्ररामंद्रक्ष्यामिशीघ्रमानयसुंदरं इत्युक्तस्त्वरितंगत्वासुमंत्रोराममंदिरे अवारि
तःप्रविष्टोयंरामंत्वरितमब्रवीत् शीघ्रमागच्छभद्रंतेरामराजीवलोचन पितुर्गृहंमयासार्द्धंराजात्वंद्रष्टु
मिच्छति इत्युक्तोरथमारुह्यसंभ्रमात्त्वरितोययौ रामःसारथिनासार्द्धंलक्ष्मणेनसमन्वितः मध्य
कक्ष्येवसिष्ठादीन्पश्यन्नतिवत्वरान्वितः पितुःसमीपंसंगम्यननामचरणौपितुः राममालिंगितुंराजा
समुत्थायससंभ्रमः बाहूप्रसार्यरामेति दुःखान्मध्येपपातह हाहेतिरामस्तंशीघ्रमालिंग्यांकेन्य
वेशयत् राजानंमूर्छितंदृष्ट्वाचुक्रुशुःसर्वयोषितः किमर्थंरोदनमितिवसिष्ठो

यतेरो रामः सत्यपराक्रमः तस्योपरि शापयेब्रूहि तद्धितं तत्करोम्यहं इति ब्रुवाणं राजानं दृष्ट्वा पतंरात्रावोप
दि शनैर्विस्मयनेत्रे सा राजन् प्रत्यभाषत यदि सत्यप्रतिज्ञोसि शपथं कुरुषे यदि यद्यामेकफलीकर्त्तुमी
च्छमेवक्तुमर्हसि पूर्वं देवासुरे युद्धे मया त्वं परिरक्षितः तदा वरद्वयं दत्तं त्वया मे तुष्टचेतसा तद्वयं त्वा
सम्मतं मे स्थापितं त्वयि हे नृप तत्रैकेन वरेणास्तु भरतो मे प्रियो हि ते इभिः सम्भृतसम्भारैर्यौवराज्येऽभि
षेचयत् अपरेण वरेणास्तु रामो गच्छतु दण्डकान् मुनिवेषधरः श्रीमान् जटावल्कलभूषणः चतुर्दशस
मा वन्यकंदमूलफलाशनः पुनरायातु तस्यांते वने वा तिष्ठतु स्वयं प्रभाते गच्छतु वनं रामो राजीवलोच
नः यदि किंचिद्विलंबेन रामाणां लांते तदागतः भवसत्यप्रतिज्ञस्त्वमेतदेव मम प्रियं श्रुत्वैतद्दारुणं वाक्यं
कैकेय्या रोमहर्षणं निपपात महीपालो वज्राहत इव द्रुमः शनैरुन्मील्य नयने वह्न्यपरं यां भिया
दुःस्वप्नो वा मया दृष्टो किं वा चित्तस्य विभ्रमः इत्यालोक्य पुनः पत्नीं व्याघ्रीमिव पुरः स्थितां राजोवाच
किमिदं भाषसे भद्रे मम प्राणहरं वचः रामः किमपराधं ते कृतवान् कमलेक्षणे ममाग्रे राघवगुणा
न्वर्णयस्यनिशं शुभान् कौसल्यां मां समं पश्यन् शुश्रूषां कुरुते सदा इति ब्रुवंती त्वं पूर्वं इदानीं भाषसे
वृथा राज्यग्रहणं भरताय राम तिष्ठतु मंदिरे अनुगृहीष्व मां रामे रामान्नास्ति भयं तव इत्युक्त्वा प
तितादोपादयोर्निपपात ह कैकेय्याः सन्तुवाचेदं सापि रक्तांतलोचना उवाच किं त्वं भ्रांतोसि राजन् त्वं
भाषसे वृथा मिथ्या करोषि चेद्राजन् भाषितं नरकं भवेत् वनं गच्छेद्यदि रामचंद्रः प्रभाते जिनचीरयुक्तः न
भद्र उद्बंधनेवा विषभक्षणेनवाहं त्वामरिष्ये पुरतस्तवाहं सत्यप्रतिज्ञोहमितीहलोके विडंबसे सर्वसभांतरेषु ॥
रामोपरि त्वं शपथं च कृत्वा मिथ्याप्रतिज्ञो नरकं प्रयाहि इत्युक्त्वाप्रियवादिनी नाम ग्रोडःखार्णवे नृपः ॥
मूर्छितः पतितो भूमौ विसंज्ञो मृतको यथा एवं रात्रिर्गता तस्य दुःखात्संवत्सरोपमा अरुणोदयकाले

अ।
२०

स्तीर्थपुनर्यास्यामितेपुरं राज्योत्क्तो हि तु तेसो व्यममराजन्नेवसः त्वन्मन्यपालनं देवकार्यंवापि
भविष्यति कैकेय्याश्च प्रियो राजन्वनेवासो महान्गुणः इदानीं गंतुमिच्छामि ब्रवीतु मातुश्च हृज्ज्वरः स
भाराश्चोपद्रहूयतामभिषेकार्थमागताः मातरं च समाश्वास्य अनुनीय च जानकीं आगत्य पादौ वं
दित्वा तत्तोपासीरुसंववने इत्युक्त्वा तु परिक्रम्य मातरं च द्रुमाययौ कौशल्यापि हरेः पूजां कुर्वंती
रामकारणात् होमं चकार विप्रांस्तु ब्राह्मणेभ्यो ददौ धनं ध्यायति विष्णुमेकाग्रमनसा मौनिमास्थिता
अंतस्य मेकं घनचित्प्रकाशं निरस्तसर्वातिशयस्वरूपं विष्णुं सदानंदमयं हृदब्जे संभावयंती न
ददर्श रामं   इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे अयोध्याकांडे तृतीयोऽध्यायः ३
सूत उवाच   ततः सुमित्रा दृष्ट्वैव रामं राज्ञी समभ्रमा कौशल्यां बोधयामास रामोऽयं समुपस्थितः
श्रुत्वैव रामनामैषा बहिर्दृष्टिप्रवाहिता रामं दृष्ट्वा विशालाक्षमालिंग्यांके न्यवेशयत् मूर्ध्न्यव
घ्राय संस्पर्श गात्राणि नीलोत्पलरुचिं शुभां भुंक्ष्व पुत्रेति च प्राह मिष्टमन्नं क्षुधार्दितः रामः प्राह न मे मातर्भो
जनावसरः कुतः दंडकागमने शीघ्रं मम कालो विनिश्चितः कैकेयीवरदानेन सत्यसंधः पिता मम ॥
भरताय ददौ राज्यं ममाप्यारण्यमुत्तमं चतुर्दशसमास्तत्र ह्युषित्वा मुनिभिः सह आगमिष्ये पुनः
शीघ्रं चिंतां मा कर्तुमर्हसि तच्छ्रुत्वा सहसा सा हि शोकमूर्छिता पुनरुत्थिता आह रामं सुदुःखार्ता दुः
खसागरसंप्लुता यदि राम वनं सत्यं यासि चेन्नय मामपि त्वद्विहीनाक्षणार्धं वा जीवितं धारये कथं य
था गौर्बालकं वत्सं त्यक्त्वा तिष्ठेन्न कुत्रचित् तथैव त्वां न शक्नोमि त्यक्तुं प्राणात्प्रियं सुतं भरताय प्र
सन्नश्चेत् राज्यं राजा प्रयच्छतु किमर्थं वनवासाय त्वामाज्ञापयति प्रियं कैकेय्या वरदो राजा सर्वस्वं वा

पितामाविशत् रामः पप्रच्छ किमिदं राज्ञः दुःखस्य कारणं एवं पृष्टस्तिरामेण कैकेयी राममब्रवीत् त्वमेवं का
रणं ह्यत्र राज्ञो दुःखोपशान्तये किंचित्कार्यं त्वया राम कर्त्तव्यं नृपतेर्हितं कुरु सत्यप्रतिज्ञस्त्वं राजानन्त
त्वया दिनं राज्ञा वरद्वयं दत्तं मम संतुष्टचेतसा त्वदाधीनं च तत्सर्वं वक्तुं त्वां लज्जते नृपः सत्यपाशेन
संबद्धं पितरं त्रातुमर्हसि पुत्रशब्देन चोक्तं त्वं न कीर्तनं त्रायते पितु रामस्तयोदितं श्रुत्वा शूलेनाभिह
तो यथा कैकेयीं व्यथितः प्राह किं मामेवं प्रभाषसे श्रीरामोवाच पित्रोर्थे जीवितं दास्ये पिबेयं विषमु
ल्बणं सीतां त्यजेयं कौसल्यां राज्यं चापि त्यजाम्यहं अनाज्ञप्तोपि कुरुते पितुः कार्यं स उत्तमः उक्तः
करोति यः पुत्रः स मध्यम उदाहृतः उक्तोपि कुरुते नैव स पुत्रो मल उच्यते अतः करोमि तत्सर्वं यन्मा
माह पिता मम सत्यं सत्यं करोम्येव रामो द्विर्नाभिभाषते इति रामप्रतिज्ञां सा श्रुत्वा वक्तुं प्रचक्रमे ।
राम त्वदभिषेकार्थं संभाराः संभृताश्च ये तेनैव भरतोप्यत्रमभिषेच्यः प्रियो मम अपरेण वरेणाशु
चीरवासा जटाधरः वनं प्रयाहि शीघ्रं त्वमद्यैव पितुराज्ञया चतुर्दश समास्तत्र वसन्मुन्यन्नभोज
नः एतदेव पितुस्तावत्कार्यं त्वं कर्तुमर्हसि राजा तु लज्जते वक्तुं त्वामेव रघुनंदनः श्रीरामोवाच ॥
भरतस्यैव राज्यं स्यादहं गच्छामि दंडकान् किंतु राजा न वक्तीह मां न जाने च कारणं श्रुत्वैतद्रामवच
नं दृष्ट्वा रामं पुरः स्थितं प्राह राजा दशरथो दुःखितो दुःखितं वचः स्त्रीजितं भ्रांतहृदयमुन्मार्गप
रिवर्तिनं निगृह्य मां गृहाणेदं राज्यं पापं न तेऽभवेत् एवं चेदनृतं नैव मां स्पृशेद्रघुनंदन इत्युक्त्वा दुः
खसंतप्तो विललाप नृपस्तदा हा राम हा जगन्नाथ हा मम प्राणवल्लभ मां विसृज्य कथं घोरं विपिनं गं
तुमिच्छसि इति रामं समालिंग्य मुक्तकंठो रुरोद ह विसृज्य नयने रामः पितुः सजलपाणिना आ
श्वासयामास नृपतिं शनैर्विनयकोविदः किमत्र दुःखेन विभो राज्यं शास्तु ममानुजः अहं प्रतिज्ञां नि

ते देहोहंभावमापन्नो राजाहं लोकविश्रुतः इत्युक्तिमिन्मुनिं ते जंतुरंते विज्ञत्सं संचिते त्वगस्थिमांस
विट्मूत्ररेतोरक्तादिसंयुते विकारी परिणामी च देह आत्मा कथं वद यामास्थाय भवाल्लोकान्द्र
ष्टुमिच्छसि लक्षण देहाभिमानिनः सर्वदोषा प्रादुर्भवंति हि देहोहमिति या बुद्धिरविद्या सा प्रकी
र्तिता नाहं देहश्चिदात्मेति बुद्धिर्विद्येति भण्यते अविद्या संसृते हेतुर्विद्या तस्या निवर्त्तिका तस्माद्य
त्नः सदा कार्यो विद्याभ्यासे मुमुक्षुभिः कामक्रोधादयस्तत्र शत्रवः शत्रुसूदनः तत्रापि क्रोध एव
वमोक्षाविघ्नाय सर्वदा येनाविष्टः पुमान्हंति पितृभ्रातृसुहृत्सखीन् क्रोधमूलमनस्तापः क्रो
धः संसारबंधनं धर्मक्षयकरः क्रोधः तस्मात्क्रोधं परित्यजेत् क्रोध एव महान्शत्रुः तृष्णा वैतरणी
नदी संतोषो नंदनवनं शांतिरेव हि कामधुक् तस्माच्छांतिं भजस्वाद्यशत्रुः एवं भवेन्न ते देहेंद्रिय
मनःप्राणबुद्ध्यादिभ्यो विलक्षणः आत्मा शुद्धः स्वयंज्योतिरविकारी निराकृतिः यावद्देहेंद्रियप्राण
भिन्नात्वेनात्मनो विदुः तावत्संसारदुःखौघैः पीड्यन्ते मृत्युसंयुताः तस्मात्त्वं सर्वदाभिन्नमा
त्मानं हृदि भावय बुद्ध्यादिभ्यो बहिः सर्वमनुवर्त्तस्व माखिद भुंज प्रारब्धमखिलं सुखं वा दुः
खमेव च प्रवाहपतितं कार्यं कुर्वन्नपि न लिप्यते बाह्ये सर्वत्र कर्तृत्वमावहन्नपि राघव अं
तः शुद्धः स्वभावस्त्वं लिप्यसे न च कर्मभिः एतन्मयोदितं कृत्स्नं हृदि भावय सर्वदा संसारदुः
खैरखिलैर्बाध्यसे न कदाचन कदाप्येवं मयादिष्टं हृदि भावयसे त्वं तदा ममागमनं मत्तो विलसनदुः २१

अयं हितु त्वया किमपराद्धं हि कैकेय्या वा नृपस्य वा पिता गुरुर्यथा राम तथा हि मम पिका तथा पित्राहमो
वनं गंतुं वारये यमहं हुते यदि गच्छसि महाकामुकस्य नृपवाक्यतः तदा प्राणान्परित्यज्य गच्छामि
यमसादनं लक्ष्मणोपि ततः श्रुत्वा कौशल्यावचनं रुषा उवाच राघवं वीक्ष्य दहन्निव जगत्त्रयं
उन्मत्तं भ्रांतमनसं कैकेयीवशवर्तिनं बध्वा निहन्मि भरतं तद्बंधून्मातुलानपि अद्य पश्यंतु शौर्यं
मे लोकान्प्रदहतः पुरः राम त्वमभिषेकाय कुरु यत्नमरिंदमः धनुष्पाणिरहं तत्र निहन्म्याविघ्नका
रिणः इति ब्रुवंतं सौमित्रिमालिंग्य रघुनंदनः शूरोसि रघुशार्दूल ममात्यंतहिते रतः जानामि स
र्वं ते सत्यं किंतु तन्न समाहितं यदिदं दृश्यते विश्वं राज्यं देहादिकं च यत् यदि सत्यं भवेत्तत्र आयासः
सफलश्च ते भोगा मेघवितानस्थविद्युल्लेखेव चंचलाः आयुरप्यग्निसंतप्तलोहस्थजलबिंदुवत् यथा व्या
लगलस्थोपि भेको दंशानपेक्षते तथा कालाहिना ग्रस्तो लोको भोगानशाश्वतान् करोति दुःखेन हि
कर्मतंत्रं शरीरभोगार्थमहर्निशं नरः देहस्तु भिन्नः पुरुषात्समीक्ष्यते को वात्र भोगः पुरुषेण भुज्यते।
पितृमातृसुतभ्रातृदारबंध्वादिसंगमः प्रपायामिव जंतूनां नद्यां काष्ठौघवच्चलः छायेव लक्ष्मीश्च
पला प्रतीता तारुण्यमंबूर्मिवदध्रुवं च स्वप्नोपमं स्त्रीसुखमायुरल्पं तथापि जंतोरभिमान एष ।।
संसृतिः स्वप्नसदृशी सदा रोगादिसंकुला गंधर्वनगरप्रख्या मूढस्तामनुवर्तते आयुष्यं क्षीयते यस्मा
दादित्यस्य गतागतैः दृष्ट्वान्येषां जरामृत्यू कथंचिन्नैव बुध्यते स एव दिवसः सैव रात्रिरित्येव मूढ
धीः भोगाननुपतत्येव कालवेगं न पश्यति प्रतिक्षणं क्षरत्येतदायुरामघटांबुवत् सपत्ना इव रोगौ
घाः शरीरं प्रहरंत्यहो जरा व्याघ्रीव पुरतस्तर्जयंत्यवतिष्ठते मृत्युः सहैव यात्येष समयं संप्रतीक्ष

म

रा॰
२२

विना मां तु तव राघव नोचितं तामाह राघवः प्रीतः स्वप्रिये प्रियवादिनी कथं वनं त्वां नेष्येहं वने व्यालमृगा
कुले राक्षसा घोररूपाश्च संति नानामुखभोजिनः सिंहव्याघ्रवराहाश्च संचरंति समंततः कटम्लफल
मूलानि भोजनार्थं त्वमध्यमे अप्यानि व्यंजनानि विद्यंते न कदाचन काले फलैर्विना वापि विद्यते
कुत्र हे दरि मार्गो न दृश्यते क्वापि शार्करा कंटकान्वित गुहागह्वरसंवाय मक्षरं दंशादिभिर्युते ए
वं बहुविधदोषवनं देव कसंज्ञितं पादचारेण गंतव्यं शीतवातातपादिमत् राक्षसादीन्वने दृष्ट्वा जीवि
तं हास्यते चिरात् तस्माद्गृहे तिष्ठ शीघ्रं द्रक्ष्यसि मां पुनः रामस्य वचनं श्रुत्वा सीता तु दुःखसमन्वि
ता कथं मां निक्षसे त्यक्तुं धर्मपत्नीं पतिव्रतां त्वदन्यां मदेवां मां धर्मज्ञो दयापरः त्वत्समीपस्थि
तां राम कोवा मां द्रष्टुमुद्यते वने फलमूलादिकं यद्यत्त्वमदक्षावशोषितं तदेवामृततुल्यं ते सेनतु हे वरा
मयहं त्वया सह चरंत्या मे कुशाः कांशाश्च कंटकाः उप्यतल्पतुल्या मे भविष्यंति न संशयः महं तो
लेपं पश्यन्वैव भवेयं कार्यसाधिनी बाल्येपि मां वीक्ष्य कश्चिन्न ज्योतिःशास्त्रविशारदः प्राह ते विपिने वा
साः पत्या सह भविष्यति सत्यवादी द्विजोभूयात् गमिष्यामि त्वया सह अन्यत्किंचिन्मया श्रुत्वा मिक्षत्वा
मां नय काननं रामायणानि बहुशः श्रुतानि बहुभिर्द्विजैः सीतां विना वने रामो गतः किं तत्र चिद्
र अन्यत्त्वया गमिष्यामि सर्वथा त्वत्सहायिनी यदि गच्छसि मां त्यक्त्वा प्राणांस्त्यक्ष्यामि तेग्रतः इति
तं निश्चयं ज्ञात्वा सीताया रघुनंदनः अब्रवीद्देवि गच्छ त्वं वनं शीघ्रं मया सह अरुंधत्यै प्रयच्छाशु हा
रान्नाभरणानि च ब्राह्मणेभ्यो धनं सर्वं दत्वा गच्छ महे वने श्रीरामोवाच लक्ष्मण त्वं हि शीघ्रं चाहि
ज्ञानाहूय भक्तितः स्वहो गवां सहस्र शतं धनानि वस्त्राणि दिव्यानि विभूषणानि कुटुंबवद्भ्यः श्रु
ति शीलवद्भ्यो मुदा द्विजेभ्यो रघुवंशकेतुः अरुंधत्यै ददौ सीता मुख्याभरणानि च रामो मातुः से
वकेभ्यो ददौ धनमनेकधा स्वकातः पुरवासिभ्यो सेवकेभ्यस्तथैव च पौरजानपदेभ्यश्च ब्राह्मणेभ्यः

देवपी ज्ञाते चिरं न सहैकत्र संवासः कर्ममार्गानुवर्त्तिनां यथा प्रवाहपतितानां प्लवानां सरितां तथा चतुर्दश
समास्त्वया तावदहं मिव ज्ञायते अनुमन्यस्व मामेवाङ्गुः त्वं सत्यं त्यज हरतः एवं चेत्सुखसंवासो भ
विष्यति वने मम इत्युक्त्वा दण्डवन्मातुः पादयोरपतच्चिरं शिरस्तु पादयोस्तस्याः गमनायोपचक्र
मे उत्थाप्योत्सङ्गे समावेश्य सा शिरोभिरनन्दयत् सर्वे देवाः सगन्धर्वा ब्रह्मा विष्णुशिवादयः रक्षन्तु
त्वां यानु तिष्ठन्तं निद्रया युते इति सा स्थापयामास समालिङ्ग्य पुनः पुनः लक्ष्मणोपि तदा रामं न
त्वा हर्षाश्रुगद्गदः अहं राम समागन्तास्यामि मातेयोऽन्वयाहुतोः यास्यामि इष्टतो राम सेवार्थं कर्तुं
दा दिश अनुग्रहीष्व मां राम नो चेत्प्राणांस्त्यजाम्यहं तथेति राघवो व्याह लक्ष्मणं याहि माचि
रं ततः सीतां समाधातुं गतः सीतापतिर्विभुः आगतं प्रतिमालोक्य सीता सुस्मितभाषिणी स्वर्णपा
त्रस्थसलिलैः पादौ प्रक्षाल्य भक्तितः पश्चात्तु पतिमासीनं देवाकिं सेनया विना आगतोसि गतः कु
त्र छत्रं च चवाकुतः वादित्राणि न वाद्यन्ते किरीटादिविवर्जितः सामन्तराजसहितः सम्भ्रमात्तामतो
ति किं इति सा सीतया पृष्टो रामः सस्मितमब्रवीत् श्रीराम उवाच राज्ञा मे दण्डकारण्ये राज्यं दत्तं
शुभे खिलं अतस्तत्पालनार्थाय शीघ्रं यास्यामि भामिनि अद्यैव यास्यामि वने त्वं तु श्वश्रूसमीपगाः
शुश्रूषां कुरु मे मातुः न मिथ्यावादिनो वयं इति ब्रुवन्तं श्रीरामं सीता भीता ब्रवीद्वचः किमर्थं वनराज्यं
ते पित्रा दत्तं महात्मना एतत्कथय भो देव सन्ततं मे मनो यतः श्रीराम उवाच तामाह रामः कैकेय्या
राजा प्रीतो वरं ददौ भरताय ददौ राज्यं वनवासं ममानघे चतुर्दश समास्तत्र पश्चात् मे कल्पयाचितः
तया दत्त्वा ददौ राज्यं सत्यवादी दयापरः अतः शीघ्रं गमिष्यामि मा विघ्नं कुरु भामिनि श्रुत्वा तदा म
वचनं जानकी प्रीतसंयुता सीता उवाच अहमग्रे गमिष्यामि वनं पश्चात्त्वमेष्यसि इत्याह मां

श्री
२२

मथने सर्वमंदरे रसातलंगते अधारयत्पृष्ठेऽद्रि कूर्मरूपी रघूत्तमः महीं रसातलं याता प्रलये सूकरो भ
वान् तोलयामास दंष्ट्राग्रेण तदा त्वं रघुनंदनः नारसिंह वपुः कृत्वा प्रह्लाद वरदः पुरा त्रिलोककंटकं दै
त्यं पाटयामास ते नखैः पुत्रराज्यहृतं दृष्ट्वा ह्यदित्या याचितः पुरा वामनत्वमुपागम्य याचयाचहृतं पुनः
दुष्टक्षत्रियसंहार निहत्यै भार्गवो भवत् साप्रतं जगतां नाथ इदानीं समुपागतः रावणादीनि रक्षांसि को
टिशो निहनिष्यसि मानुषेनैव मरणं तस्य दृष्टं दुरात्मनः राजा दशरथेनापि तपसाराधितो हरिः
पुत्रत्वकांक्षया विष्णो तदा पुत्रोऽभवद्धरिः एवं विष्णुश्री रामो रावणस्य वधाय हि गत्वाद्यैव वनं रा
मो लक्ष्मणेन सहायवान् एषा सीता हरेर्भार्या सृष्टिस्थित्यंतकारिणी राजा वा कैकेयी वापि नात्र का
रणमन्यपि एवं पुनारदः प्राह भूभारहरणाय च रामो व्याहरत्येनं तदाद्धो गमिष्याम्यहं वनं प्रा
तो राम समुद्दिश्य चिंतां त्यजिय वालिशाः रामरामेति ये नित्यं जपंति मनुजा भुवि तेषां मृत्युभया
दीनि न भवंति कदाचनः किं पुनस्तस्य रामस्य उमाकामहात्मनः रामनाम्नैव मुक्तिः स्यात्कलौ
नान्यत्र कुत्रचित् मायामानुषरूपेण विडंबयति लोककृत् भक्तानां भजनार्थाय रावणस्य च
वधाय च राजश्चाभीष्टसिद्ध्यर्थं मानुषं वपुरास्थितः इत्युक्त्वा वररामाय वामदेवो महामुनिः
प्रकृत्यानतोऽपि हि ज्ञास सर्वे रामं ज्ञात्वा हरिं विभुं जहुर्हित्सपापा ग्रंथराममेवानुचिंतयन् यइदं चिंत
येन्नित्यं रहस्यं रामसीतयोः तस्य रामे दृढा भक्तिर्भवेद्विज्ञानपूर्वकं रहस्यं गोपनीयं वो यूयं वै रा
घवप्रियाः इत्युक्त्वा प्रययौ विप्रस्तोऽपि रामं परं विदुः ततो राम समाविश्य पित्रगेहमवारितः सानु
जः सीतया गत्वा कैकेयीमिदमब्रवीत् आगतोऽस्मि वयं मातस्त्वयक्तोऽहं मतं वनं गंतुं कृतनिश्चयः शी
घ्रमाज्ञापय तु नः पिता इत्युक्त्वा सहत्याय चीराणि प्रददौ स्वयं कैकेय्युवाच रामवल्कलानि से



सो

सहस्रशः लक्ष्मणोपि सुमित्रां तु कौशल्यायै समर्पयन् धनुःपाणिः समागत्य रामस्याग्रे व्यवस्थितः ।
रामः सीता लक्ष्मणश्च जग्मुः सर्वे नृपालये श्रीरामः सहसीतायानं पथ्ये गच्छन् शनैः सानुजः पौरा
नजानपदान् कौतूहलदृशः सानंदं सुखीकुर्वन् श्रीरामः कामसहस्रसुंदर वपुः कांत्यादिशोभास
यन् पादन्यासपवित्रिताखिल जगत्प्रापालयं तेन तत्पितुः इतिश्रीमदध्यात्मरामायणे उमामहे
श्वरसंवादे अयोध्याकांडे चतुर्थोऽध्यायः ४ सूत उवाच आयांतं नागराः दृष्ट्वा मार्गे रामं सजानकी
लक्ष्मणेन समं वीक्ष्य ऊचुः सर्वे परस्परं कैकेय्या वरदानादि श्रुत्वा दुःखसमाकुलाः वत राजा दश
रथः सत्यसंधः प्रियं सुतं स्नेहेन तोरं त्याजितवान् कामी तस्य सत्यवतः कुतः कैकेयी वा कथं दुष्टा रामं सत्य
प्रियः करं विवासयामास कथं क्रूरकर्मेति मूढधीः हे जनानत्र वत्स्यामो गच्छामो देवकाननं यत्र
रामः सभार्यश्च सानुयोगं तु मिच्छति पश्यंतु जानकी सर्वे पादचारेण गच्छती छुटिः कदाचित् दृष्टा
वा जानकी लोकसुंदरी सापि पादेन गच्छती जनसंघैर्घनाहताः रामो पि पादचारेण गजाश्वादि वि
वर्जितः मध्ये तपश्च पथि किंतु सर्वलोकैकसंमतं कैकेयी राक्षसी नाम्ना जाता सर्वविनाशिनी रामस्या
पि भवेद्दुःखं सीता पापादयानतः बलवान्विधिरेवात्र प्रयत्नो हि दुर्बलः इति दुःखाकुले ह्येते देवा
दूतो मुनिपुंगवः अब्रवीद्वामदेवोथ साधूनां संसदमध्यगः मा नु शोचाथ रामं वा सीतां वा वदतस्तु तः
एष रामः परो विष्णुः आदिनारायणः स्मृतः एषा साक्षात् जानकी लक्ष्मीर्योगमायेति विश्रुता असौ शेष
समन्वेति लक्ष्मणाख्यो ह्यसौ सतां एष मायागुणैर्युक्तस्तत्तदाकारवानिव एषएव रजोयुक्तो ब्र
ह्मा हि च भावनः सत्वाविष्टस्तथा विष्णुस्त्रिजगत्प्रतिपालकः एष रुद्रस्तमस्संते जगत्प्रलयकार
णं एष मत्स्यः पुरा भूत्वा भक्तं वैवस्वतं मनुं नाव्यारोप्य प्रलयसोते पालयामास राघवः ससुद्र

पुरंनेतुंनोचेद्गच्छामहेवनं इतिनिश्चयमास्थायतेषांरामोतिविस्मितः नाहंगच्छामिनगरमेतेनैवत्ते
ष्वागतिनः भविष्योतिसनिश्चित्यसुमंत्रमिदमब्रवीत् इदानीमेवगच्छामःसुमंत्ररथमानय इत्या
देशतःसुमंत्रोपिरथंवाहैरयोजयत् आरुरोहरामःसीताचलक्ष्मणोपिययुस्तेअयोध्याभिमुखंग
त्वाकिंचिद्दूरंपुनर्ययुः तेपिरामसहैवप्रातरुत्थायदुःखिताः रथनेमिगतंमार्गंपश्यन्तःपरे
ययुः हाहारामसहीनेनेत्यायततत्रैवस्थुरन्वहं सुमंत्रोपिरथंशीघ्रंचोदयामाससादरं स्फी
तान्जनपदान्सरामःसीतासमन्वितः गंगातीरंसमागच्छच्छृंगवेरेविदूरतः गंगांदृष्ट्वानम
स्कृत्यस्नात्वासानंदमानसः शिंशुपावृक्षमूलेसनिषसादरघूत्तमः ततोगुहोजनैःश्रुत्वा
रामागममहोत्सवं सखायंस्वामिनंद्रष्टुंहर्षात्तूर्णंसमागमत् फलानिमधुपुष्पादिगृहीत्वा
त्वाभक्तिसंयुतः रामस्याग्रेविनिक्षिप्यदंडवत्प्रापतद्भुवि गुहमुत्थाप्यतूर्णंराघवःपरिषस्व
जे संपृष्टःकुशलोरामेगुहःप्रांजलिरब्रवीत् धन्योहमद्यमेजन्मनिषाधलोकपावनः बभू
वपरमानंदःस्पृष्ट्वातेगात्रमुत्तमः नैषादराज्यमेतत्तेकिंकरस्यरघूत्तमः त्वदधीनंवसतत्रपा
लयास्मान्रघूद्वह आगच्छयामोनगरंपावनंकुरुमेगृहं गृहाणफलमूलानित्वदर्थंसंचिता
निमे अनुगृहीष्वभवन्दासस्तेहंरघूत्तम रामस्तमाहसुप्रीतोवचनंशृणुमेसखे नवेक्ष्यामि
गृहंग्रामंवर्षाणिनवपंचच दत्तमान्यन्ननोभुंजेफलमूलादिकंचनः राज्यंतेममतत्सर्वंसखि
सखामेतिवल्लभः वटक्षीरंसमानाय्यजटामुकुटमादरात् बबंधलक्ष्मणेनायसहितोरघुनं
दनः जलमात्रंतुसंप्राश्यसीतयासहराघवः आस्तीर्णंकुशपर्णाद्यैःशयनंलक्ष्मणेनहि ।

त्यज्य चीराणि परिगृह्यतां रामाय लक्ष्मणाय सीतायै च दशरथः कृपया रामस्तु वस्त्राण्युत्सृज्य व
ल्कचीराणि पर्यधत्त लक्ष्मणोपि तथा चक्रे सीता तन्न विजानती हस्ते गृहीत्वा रामस्य लज्जया गुरु
मैत्तत रामो गृहीत्वा तच्चीरं मेखलोपरि ववेष्टयत् तं दृष्ट्वा रुरुदुः सर्वे राजदाराः समन्ततः वसिष्ठ
स्तु तदा कर्णपिधायति भर्त्सयन् कैकेयी प्राह दुष्टे रामेण वक्तव्या हि ततः वनवासाय दुष्टे त्वं सी
तायै किं भवत्यस्ति यदि रामस्त्वमेनेति सीता भक्त्या पतिव्रता दिव्याम्बरधरा नित्यं सर्वाभरणभूषि
ता रामपत्नी निशो राम वनं दुःखनिवारिणी राजा दशरथोप्याह सुमंत्र रथमानय रथमारुह्य गच्छ
तु कञ्चरथिया: इत्युक्त्वा राममालोक्य सीतां चैव सलक्ष्मणं दुःखान्निपतितो भूमौ रुरुदा
श्रुपरिप्लुतः आरुरोह रथं सीता शीघ्रं रामस्य पश्यतः रामः प्रदक्षिणं कृत्वा पितरं रथमारुरुहत्
लक्ष्मणः खड्गयुगलं धनुस्तूणीरयुगं तथा गृहीत्वा रथमारुह्य नोदयामास सारथिं राजा तिष्ठ
सुमंत्रेति राजा दशरथो ब्रवीत् गच्छ गच्छेति रामेण चोदितो चोदयद्रथं रामे दूरं गते राजा मूर्छि
तः प्रापतद्भुवि पौराश्च बालवृद्धाश्च वृद्धा ब्राह्मणास्तथा तिष्ठ तिष्ठेति रामेति क्रोशन्तो रथमन्व
गुः राजा रुदित्वा हा चिरं मानयत गृहं प्रति कौशल्याया मम मातुरित्याह परिचारकान् किञ्चि
त्काले भवेत्तत्र जीविते दुःखसमे अतऊर्ध्वं न जीवामि चिरं राम विनाद्यतः ततो गृहं प्रविशेव कौ
शल्यायाः पपात ह मूर्छितश्चचिरात्तु बुद्ध्वा लक्ष्मीमेवावतस्थिवान् रामस्तु तमसातीरे गत्वा तत्राव
तत्सुधी जलं पश्यन्निराहारो वृक्षमूले स्वयन्प्रभुः सीतया सह धर्मात्मा धनुःपाणिस्तु लक्ष्मणः
पालयामास धर्मज्ञः सुमंत्रेण समन्वितः पौराः सर्वे समागत्य स्थितास्तत्रा विहरन्तः शब्दारामं

अ
२५

इत्यादिशोपपन्नेषु नहृष्यति न शुसंतिरुर्वमायेति भावनात् गुहलक्ष्मणयोरेवं भाषतोर्विमलं
नसः बभूव रामः सलिलस्पर्शप्रशांतः समाहितः उवाच शीघ्रं मह ढोनावमानय मे सखे ॥
आरुह्य परयारेवं गमिष्यामोऽथ माचिरं श्रुत्वा रामस्य वचनं निषादाधिपतिर्गुहः स्वयमेव है
ढोनावमानाय सुभलक्ष्मणौ गुह उवाच स्वामिन्नारुह्यतां नौका सीतया लक्ष्मणेन च वाह
येऽज्ञातिभिः सार्द्धमहमेव समाहितः तथेति राघवः सीतामारोप्य सुभलक्ष्मणां गुहस्य हस्ता
वालंब्य स्वयं चारुरुह च सुत आयुधादीन्समानीय लक्ष्मणोऽप्यारुरोह च गुहस्तां वाहयामास
ज्ञातिभिः सहितः स्वयं गंगामध्यगतां गंगां प्रार्थयामास जानकी देवि गंगे नमस्तेऽस्तु निर्वृत्ताव
नवासतः रामेण सहिताहं त्वां लक्ष्मणेन च पूजयेत् फलपुष्पोपहारैश्च नानाबलिभिरादृता
इत्युक्त्वा परकूले ते शनैः उत्तीर्य जग्मतुः गुहोऽपि राघवं प्राह गमिष्यामि त्वया सह अनुज्ञां देहि
राजेन्द्र नोचेत्प्राणांस्त्यजाम्यहं श्रुत्वा नैषाद वचनं श्रीरामस्तुमनयाब्रवीत् गुह त्वयात्रस्यात
व्यं मम मार्गावलोककः चतुर्दश समास्थित्वा दंडके पुनरप्यहं आयास्याम्युदितं सत्यं नासत्यं
रामभाषितं इत्युक्त्वालिंग्य तं भक्तं समाश्वास्य पुनः पुनः निवर्तयामास गुहं सोऽपि कृच्छ्राद्
योऽगदह् तत्र मेध्यं मृगं हत्वा पक्त्वाहृत्वा च ते त्रयः भुक्त्वा हृत्तदले हृष्टा सुखमासे ततो निशां त
तो रामस्तु वैदेह्या लक्ष्मणेन समन्वितः आसेव हिर्वनस्थितिस्तु चतां मुनिसन्निधौ तच्छ्रुत्वास
हसागत्वा पादयोः पतितो मुनेः स्वामिन्रामः समागत्य वनाद्बहिरुपस्थितः सभार्यः सानु
जः श्रीमानीह मोदेव सन्निभः भारद्वाजाय मुनये ज्ञापयस्व यथोदितं तच्छ्रुत्वा सहसो २५

उवाच तत्र नगरं प्रसादाग्रे यथा पुरा स्वपायन तत्र वैदेह्या पर्यंक इव संस्कृते ततोविदूरे परितस्स
चापस्सबाणान्तूणीरधरः सलक्ष्मणः ररक्ष रामं परितो विपश्यन्गुहेन सार्द्धं सशरासनेन ॥
इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे अयोध्याकाण्डे पंचमोध्यायः ५ सूत उवाच
सुप्तं रामं समालोक्य गुहः साश्रुपरिप्लुतः लक्ष्मणं प्राह विनयाद्भ्रातः पश्यसि राघवं गुह उवाच
शयानं कुशपत्रौघः संस्तरे सीतया सह शेते स्वर्णपर्यंके स्वास्तीर्णे भवनोत्तमे कैकेयी रामदुः
खस्य कारणं विधिना कृता मंथराबुद्धिमास्थाय कैकेया पापमाचरन् तच्छ्रुत्वा लक्ष्मणः प्राह
सखे शृणु वचो मम कः कस्य हेतुर्दुःखस्य कस्य हेतुः सुखस्य वा स्वपूर्वार्जितकर्मैव कारणं सुख
दुःखयोः सुखस्य दुःखस्य न कोपि दाता परो ददातीति कुबुद्धिरेषा अहं करोमीति वृथा
भिमानः स्वकर्मसूत्रग्रथितो हि लोकाः सुहृन्मित्रार्युदासीनद्वेष्यमध्यस्थबांधवाः स्वयमे
वाचरत्कर्म भोजयेत्तत्र तत्र नान्यथा सुखं यदि वा दुःखं स्वकर्मवशगोचरः यद्यद्यथागतं तत्तद्भु
क्त्वा स्वस्थमना भवेत् न मे भोगागमे वांछा न मे भोगविवर्जिनैः आगच्छत्वथ मा गच्छेन्न भोगवशा
गो भवेत् यस्मिन्देशे च काले च यस्माद्वा येन केन कृतं शुभाशुभं कर्म कृतं भोज्यं तत्र तत्र नान्य
था अलं हर्षविषादाभ्यां शुभाशुभफलोदये विधात्रा विहितं यद्यत्तदलंघ्यं सुरासुरैः स
र्वदा सुखदुःखाभ्यां नरः प्रत्यवरुध्यते शरीरं पुण्यपापाभ्यामुत्पन्नं सुखदुःखमत् सुखस्या
नन्तरं दुःखं दुःखस्यानन्तरं सुखं द्वयमेतद्धि जन्तूनामलंघ्यं दिनरात्रिवत् सुखमध्ये स्थितं दुः
खं दुःखमध्ये स्थितं सुखं द्वयमन्योन्यसंयुक्तं प्रोच्यते जलपंकवत् तस्माद्धैर्येण विद्वांस

ब्रवीत् त्वमेव सर्वलोकानां निवासस्थानमुत्तमं तवापि सर्वभूतानि निवाससदनानि हि एवं साधारणं स्था
नमुक्तं ते रघुपुंगवः सीतया सहितस्येति विशेषं पृच्छतस्तव तद्वक्ष्यामि रघुश्रेष्ठ यत्ते नियतमंदिरं शांतानां
समदृष्टीनामद्वेष्टॄणां च जंतुषु त्वामेव भजतां नित्यं हृदयं तेऽधिमंदिरं धर्माधर्मान्परित्यज्य त्वामेव
शरणं गतः निर्द्वंद्वो निःस्पृहस्तस्य हृदयं ते सुमंदिरं त्वन्मंत्रजापको यस्तु त्वामेव शरणं गतः त्वांची
कुरुते पल्लवं तत्र ते मंदिरं शुभं निरहंकारिणः शांता ये रागद्वेषविवर्जिताः समलोष्टाश्मकनकास्ते
षां ते हृदयं गृहं त्वयि दत्तमनोबुद्धिर्यः संतुष्टः सदा भवेत् त्वयि संत्यक्तकर्मा यस्तन्मनस्ते शुभं गृ
हं यो न द्वेष्ट्यप्रियं प्राप्य न हृष्यति न कांक्षति सर्वं मायेति निश्चित्य त्वां भजेत्तन्मनो गृहं षड्भावा
दिविकारान्यो देहे पश्यति नात्मनि क्षुत्तृट्सुखं भयं दुःखं प्राणबुद्ध्योर्निरीक्षते संसारधर्मैर्निर्मुक्तः
तस्य ते मानसं गृहं पश्यंति ये सर्वगुहाशयस्थं त्वां चिद्घनं सत्यमनंतमेवं अलेपकं सर्वगतं वरे
ण्यं तेषां हृदब्जे सह सीतया वस निरंतराभ्यासदृढीकृतात्मनां त्वत्पादसेवापरिनिष्ठितानां त्वन्ना
मकीर्त्या हतकल्मषाणां सीतासमेतस्य गृहं हृदब्जे रामत्वन्नाममहिमा वर्ण्यते केन वा कथं य
त्प्रभावादहं राम ब्रह्मर्षित्वमवाप्तवान् अहं पुरा किरातेषु किरातैः सह वर्द्धितः जन्ममात्रद्विज
त्वं मे शूद्राचाररतः सदा शूद्रायां बहवः पुत्रा उत्पन्ना मेऽजितात्मनः ततश्चोरैश्च संगम्य चोरोऽहमभवं
पुरा धनुर्बाणधरो नित्यं जीवानामंतकोपमः एकदा मुनयः सप्त दृष्टा महति कानने स्वभासपः प्र
कारांते ज्वलनार्कसमप्रभाः तानन्वधावं लोभेन तेषां सर्वपरिच्छदान् ग्रहीतुकामस्तत्राहं तिष्ठ ति २६
ष्ठेति चाब्रुवं दृष्ट्वा मां मुनयोऽपृच्छन्किमायासि द्विजाधम अहं तानब्रुवं किंचिदादातुं मुनिसत्तमाः

त्याय भरद्वाजो मुनीश्वरः ग्रहीत्वार्घ्यं च पाद्यं च राममस्मातीप्प्रमायपौ दृष्ट्वा रामं यथान्यायं पूजयित्वा सलक्ष्मणं
आलमे पर्णशालो मे रामं राजीवलोचनं आगच्छ पादरजसा पुनीहि रघुनंदन इत्युक्तो जलमानीय सी
तया सह राघवो भक्त्या पूजनः पूजयित्वा चकारोन्यप्रथडत्तमे अद्याहं तपसः पारं गतोस्मि भवसंगमात्
ज्ञातो रामं त्वां द्रष्टुं तं भुक्तं चागमकं पयत् जानामि त्वां परमात्मानं मायया कृतमानुषं यदर्थमवतीर्णो
सि प्रार्थितो ब्रह्मणा पुरा यदर्थं वनवासस्ते यत्करिष्यसि वै पुनः जानामि ज्ञानदृष्ट्याहं सततं त्वदु
पासनात् इतः परं त्वं किं वक्ष्ये कृतार्थोहं रघूत्तम यत्त्वां पश्यामि काकुत्स्थ पुरुषं प्रकृतेः परं राम
लममभिवाद्याह सीतालक्ष्मणसंयुतः अनुग्राह्यास्त्वया ब्रह्मन्वयं क्षत्रियबांधवाः इति संभाष्य तेन्योन्य
मुषित्वा मुनिसान्निध्ये प्रातरुत्थाय यमुनां मुत्तीर्य मुनिदारकैः कृतप्लवेन मुनिना दिष्टमार्गेण रा
घवः प्रययौ चित्रकूटाद्रिं वाल्मीकेराश्रमं शुभं गत्वा रामोथ वाल्मीकेराश्रमं ऋषिसंकुलं नाना
मृगद्विजाकीर्णं नित्यं पुष्पफलादिकं तत्र दृष्ट्वा समासीनं वाल्मीकिं मुनिसत्तमं ननाम शिर
सा रामो लक्ष्मणेन च सीतया दृष्ट्वा रामं रमानाथं वाल्मीकिर्लोकसुंदरं जानकीलक्ष्मणोपेतं
जटामुकुटमंडितं कंदर्पसदृशाकारं कमनीयाम्बुजेक्षणं दृष्ट्वा वसहसोत्थाय विस्मयानिमिषेक्ष
णः आलिंग्य परमानंदं रामं हर्षाश्रुलोचनः पूजयित्वा जगत्पूज्यं भक्त्यार्घ्यादिभिरादृतः फल
मूलैः सुमधुरैर्भोजयित्वा च लालितः राघवः प्रांजलिः प्राह वाल्मीकिं विनयान्वितः पितुराज्ञो
स्ततः पदं दंडकानागता वयं भवंतो यदि जानाति किं वक्ष्यामोत्र कारणं यत्र मे सुखवासाय भवे
त्स्थानं वद सत्तमे सीतया सहितः कालं किंचिद्रत्नयाम्यहं इत्युक्तो राघवेणासौ मुनिः सस्मितम

व्यगतिं रघुकुलोत्तम अहं ते राम नाम्नश्च प्रभावादीदृशोऽभवं अद्य साक्षात्प्रपश्यामि सीतया लक्ष्म
णेन च रामराजीवपत्राक्षं त्वां मुक्तो नात्र संशयः आगच्छ राम भद्रं ते स्थलं वै दर्शयाम्यहं एवमुक्त्वा
मुनिः श्रीमान्लक्ष्मणेन समन्वितं शिष्यैः परिवृतो गत्वा मध्ये पर्वतमुख्ययोः तत्र शालां सुवि
स्तीर्णां कारयामास वासभूः प्राक्पश्चिमं दक्षिणोदक् शोभनं मंदिरद्वयं जानक्या सहितो रा
मो लक्ष्मणेन समन्वितः तत्र ते देवसदृशाः सर्वे वसंत्यभवनोत्तमे वाल्मीकिना यत्र सुपूजितो य।
रामः ससीतः सहलक्ष्मणेन देवैर्मुनींद्रैः सहितो मुदास्ते स्वर्गे यथा देवपतिः सशच्या ॥
इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे अयोध्याकांडे षष्ठोऽध्यायः ६ सूत उवाच।
सुमंत्रोऽपि तदायोध्यां दिनांते प्रविवेश ह वस्त्रेणामुखमाच्छाद्य बाष्पाकुलितलोचनः बहिरेव रथं
स्थाप्य राजानं द्रष्टुमाययौ जयशब्देन राजानं स्तुत्वा प्रणनाम्य च ततो राजा नमंतं तु सुमंतं वि
कलोऽब्रवीत् दशरथ उवाच सुमंत्र रामः कुत्रास्ते सीतया लक्ष्मणेन च कुत्र त्यक्तस्त्वया रामः
किं मां पापिनमब्रवीत् सीता वा लक्ष्मणो वापि निर्दयं मां किमब्रवीत् हा राम हा गुणनिधे हा सीते प्रि
यवादिनि दुःखार्णवे निमग्नं मां म्रियमाणं न पश्यसि विलप्यैवं चिरं राजा निमग्नो दुःखसागरे एवं
मंत्री रुदंतं तं प्रांजलिर्वाक्यमब्रवीत् रामः सीता च सौमित्रिर्मया नीता रथेन ते शृंगवेरपुराभ्यासे
गंगाकूले व्यवस्थिताः गुहेन किंचिदानीतं फलमूलादिकं च यत् स्पृष्ट्वा हस्तेन संप्रीत्या नाग्रही
न्नाहि सर्जनतः वटक्षीरं समानीय गुहेन रघुनंदनः सुमंत्र ब्रूहि राजानं शोकस्ते ऽस्तु न मत्कृ

पुत्रदारादयः सन्ति बहवो मे बुभुक्षिताः तेषां कृते लुण्ठयामि चरामि गिरिकानने ततो मामूचुर्व्यग्राः स्व
गृहं गत्वा कुटुम्बकं यो यो मया पातितो हि नैक्रियते पापफलं च यः पृच्छ तं ज्ञानिनः सर्वे किं वा ने तिष्ठ यक्ष्यथ कु
वयं स्थास्यामहे यावदागामी व्याहृति निश्चयः तथेत्युक्त्वाऽगृहं गत्वा मुनिभिर्यदुदीरितं पृष्टं तु त्र
दारादान् तेरुक्तो हं रत्नाकर त्वमः पापं त्वमेव तत्सर्वं वयं तु फलभागिनः तच्छ्रुत्वा जातनिर्वेदो विचार्य
पुनरागमं मुनयोः यत्र तिष्ठन्ति करुणापूर्णमानसाः मुनीनां दर्शनो देवमुञ्जेतः करुणाम
वं धनुरादीन्परित्यज्य पादे वन्दतितान्यहं रक्षध्वं मां मुनिश्रेष्ठा गच्छेतं निरयार्णवं रक्षत्वमेप
तितं दृष्ट्वा मामूचुर्मुनिसत्तमाः उत्तिष्ठोत्तिष्ठ भद्रं ते सफलः सत्समागमः उपदेक्ष्यामहे तुभ्यं
किंचित्तेनैव मोक्ष्यसे परस्परं समालोक्य उद्दिष्टो यद्विजाधमे उपेक्ष्य एव स हन्ते तथापि शरणं
गतः रक्षणीयं प्रयत्नेन मोक्षमार्गोपदेशतः इत्युक्त्वा रामेति नाम सकलाक्षरद्वयकं एकाग्र
मनसा तत्रैव रामेति जपस्व वत्स आगच्छामः पुनर्यावत्तावदेकस्थ राजय इत्युक्त्वा प्रययुस्ते
वै मुनयो दिव्यदर्शनाः अहं यथोपदिष्टं तैस्तथाकरवमञ्जसा जपन्नेकाग्रमनसा बाह्यं
विस्मृतवानहं एवं बहुतिथे काले गते निश्चलरूपिणः सर्वसंगविहीनस्य वल्मीको भू
न्ममोपरि ततो युगसहस्रान्ते ऋषयः पुनरागमन् मामूचुर्निः क्रमस्वेति श्रुत्वा तूर्ण
मुत्थितः वल्मीकान्निर्गतश्चाहं नीहारादिव भास्करः मामप्याहुर्मुनिगणा वाल्मीकि
स्त्वं मुनीश्वरः वाल्मीकात्संभवो यस्माद्द्वितीयं जन्म तेऽनघ इत्युक्त्वा ते ययुर्दि

विसृज्याय वेधिनि मदीय हा हतो[ऽ]स्मीति तच्छ्रुत्वाकुलो मानुषस्वरचकितः कस्यापि न कृतो दोषो मया
केन हितो विधे प्रतीक्षेते मां माता च पिता च जलकांक्षया तच्छ्रुत्वा भयकंपितोऽहं पौरुषवचः
स्थाने गत्वा यत्तत्पृष्ट्वा स्वामिन् दशरथोऽहम् अजानता मया विद्धस्त्वं मुनिर्मे हिंसीः मुनिने इत्युक्तो
पादयोस्तस्य पतितो गद्गदस्वरः तदा मामाह स मुनिर्माभैषीर्नृपसत्तम ब्रह्महत्याकृतो शो
न त्वां वेक्ष्यामि हं तपसि स्थितः पितरौ मां मत्तो दीनौ तृषया परिपीडितौ तयोस्त्वमुदकं देहि शी
घ्रमेवाविचारयन् नो चेत्त्वां भस्मसात्कर्ता पिता मे यदि कुप्यति जलं दत्त्वा तु तौ नत्वा वृत्तान्तं सर्वं
निवेदय शल्यमुद्धर मद्देहात्प्राणांस्त्यजाम्यतिपीडितः इत्युक्तो मुनिना शीघ्रं बाणमुत्पाट्य गृहे
हतः स जलकलशं धृत्वा गतोऽहं यत्र दंपती मां तौ हृष्टौ वृद्धौ शोकातुरौ पापात्मा हितो निमि ॥
न याति सलिलं गृह्य पुत्रः किं वात्र कारणं अनन्यगतिकौ वृद्धौ शोच्यौ विहृत्य परिपीडितौ आवा
मुपेक्षते किं वा भक्तिमानावयोर्हि सः इति चिन्ताविचारौ तौ मत्पादन्यासयोर्ध्वनिं श्रुत्वाऽऽह
पिता पुत्र विलंबः किं हा तत्त्वया देह्यावयोः स्तु पानीयं पिब त्वमपि वत्स इत्येवं जल्पितो भीत्या
सकाशमगमं मातः पादयोः प्रणिपत्याहमब्रुवं विनयान्वितः नाहं पुत्रस्त्वयोध्याया राजा द
शरथोऽस्म्यहं पापोऽहं मृगयासक्तो रात्रौ मृगविहिंसकः जलावतारे हरे हा स्थित्वा जलगाति
ध्वनिं श्रुत्वा शब्दवेधित्वादेकं बाणं मया त्यक्तं हतोऽस्मीति ध्वनिं श्रुत्वा भयात्तत्राहमागतः गो
टाविकीर्य पतितं दृष्ट्वाहं मुनिदारकं भीतो गृहीत्वा तत्पादौ क्षन्तव्येति चाब्रुवं माभैषीरिति

ते साकेतादपि किं सौख्यं विपिने नो भविष्यति मातुः मे वचनं ब्रूहि प्रोक्तेत्य जनुमत्वा ते अप्यास्य
स्तु राजानं दृष्ट्वा शोकपरिप्लुतं सीताश्रुपरीताक्षी ममाहं न पश्यन्नम दुःखगद्गदया वाचा रामं
किंचिद वेदनी साष्टांगप्रणिपातं मे ब्रूहि श्वश्र्वोः पदाम्बुजे इति प्ररुदंती सीतागता किंचिद्वाङ्मु
खी ततः साश्रुपरीताक्षी नावमारुरुहुल्लसा यावद्गंगा समुत्तीर्य गतास्तावदहं स्थितः ततो
दुःखेन महता पुनरेवाहमागतः ततो रुदंती कौशल्या राजानमिदमब्रवीत् कैकेयीप्रि
यभार्यासि प्रसन्नो दत्तवान्वरं त्वं राज्ये रहितं सर्वमत्युच्च किं निवासितः कृत्वा त्वमेवं न तत्वमि
दानीं किं तु रोदिति कौशल्यावचनं श्रुत्वा दानेन सुहृद्वाग्निना दशरथ उवाच किं वदिष्य
सि मां भद्रे मयि न त्वं कृतं तथा तथापि दुःखितं मां त्वं नैव वक्तुमिहार्हसि नवाहं हि फलितं
मम संतापकारकं पुनः शोकाश्रुशल्यार्तः कौशल्यामिदमब्रवीत् दुःखेन म्रियमाणं मां किं पु
नर्दुःखयसि प्रिये कौशल्योवाच किं तत्र कारणं राजन् कैकेयी कारणं महत् उभाभ्यां कारणा
भ्यां च मत्पुत्रो हि गतो वनं दशरथ उवाच दुःखेन म्रियमाणं मां किं पुनः दुःखयसि त्वं इदानी
मेव मे प्राणा उत्क्रामिष्यंति निश्चयं शृणु भद्रे मे वदामि कारणं यच्च निश्चितं शास्ताहं बाल्यभावेन
केनचिन्मुनिना पुरा पुराहं यौवने दृप्तश्चापबाणधरो निशि अचरं मृगयासक्तो नदीतीरे महा
वने तत्राहं रात्रिसमये मुनिः कश्चित्तृषार्दितः पिपासार्दितयोः पित्रोर्जलमानेतुमुद्यतः आ
पूरयञ्जलं कुंभं तत्राशब्दोऽभवन्महान् गजः पिबतीति पानीयमिति मत्वा महानिशि बाणं धनु

नि शीघ्रमागच्छन्पुरीमयोध्यां न विचारयन् इत्याकर्ण्य भरतस्त्वरितं भयविह्वलः आययौ गु
रुणादिष्टः सहहृष्टैः शत्रुघ्नानुजः राज्ञो वा राघवस्यापि दुःखं किं चिदुपस्थितं इति चिंतापरो मा
र्गे चिंतयन्नगरं ययौ नगरं भ्रष्टलक्ष्मीकं जनसंवादवर्जितं उत्सवैश्च परित्यक्तं दृष्ट्वा चिंताप
रोऽभवत् प्रविश्य राजभवने राजलक्ष्मीविवर्जिते अपश्यत्कैकेयीं तत्र एकामेवासने स्थितां
ननाम शिरसा पादौ मातुर्भक्तिसमन्वितः आगतं भरतं दृष्ट्वा कैकेयी प्रेमसंभ्रमा उत्थायालिं
ग्य परमप्रीत्या स्वांके मारोप्य संस्थिता मूर्ध्न्यवघ्राय पप्रच्छ कुशलं सकुलस्य सा ।पिता मे कुशली
भ्राता माता वा शुभलक्षणा ।। इत्युक्त्वा त्वमप्यकुशली मया हृष्टोसि पुत्रकः इति पृष्टः स भरतो
मातरं चिंताकुलेंद्रियः हृष्यमानेन मनसा मातरं समपृच्छत मातः पिता मे क्व चास्ते एका
त्वमिह संस्थिता त्वया विना न मे तातः कदाचिदिह तिष्ठति इदानीं दृश्यते नैव क्व चातिष्ठति
मे वद अदर्शने पितुर्मेद्य भयं दुःखं च जायते अथाह कैकेयी पुत्रं किं दुःखेन तनवानघ या
गीतं धर्मशीलानामश्वमेधादियाजिनां तां गतिं गतवानद्य पिता ते पितृवत्सलः तच्छ्रुत्वा नि
पपातोर्व्यां भरतः शोकविह्वलः हा तात क्व गतोसि त्वं त्यक्त्वा मां दुःखजिनार्णवे असमर्प्यैव रा
माय राज्ये मां क्व गतोसि भो इति विक्लिन्नं पुत्रं पतितं मुक्तमूर्धजं उत्थाप्याश्रु नयने कै
केयी पुत्रमब्रवीत् समाश्वसिहि भद्रं ते सर्वं संपादितं मया अधुना त्वत्कृते मे कर्तव्यं नास्ति

मां ग्रह ब्रह्महत्याभयेन ते मत्पित्रोः सलिलं दत्वा नत्वा प्रार्थय जीवितं इत्युक्तो मुनिना तेनआ
गतोऽस्मि निहिंसकः एतं तामादाय पुत्रो प्रवीत्वहं शरणागतं ज्ञात्वा महत् दुःखौ तौ विलिप्य ब
हुशोऽधमं पतितं तौ हत्ना पुत्रानयतत्राविलंबयन् ततो नीतो हतो पुत्रः मया तौ हृदुःखं पतौ स्प
ष्ट्वा सुतं तौ हत्वा भ्यां बहुशो यद्विलेपतुः हा हेति क्रंदमानौ तो पुत्र पुत्रेति वोचतुर्नौ गुलं देही
ति पुत्रेति किमर्थं न ददासि ततोऽमं नूचतुः शीघ्रं चितारचय भूपते मयातदेव रचिता वि
तात त्वि न वेशितः त्रयस्तत्राग्निकुण्डे शोदग्धा स्ते त्रिदिवं ययुः तत्र वृद्धः पिता आह त्वमप्येवं
भविष्यसि पुत्रशोकेन मरणं प्राप्स्यसे वचनान्मम सत्यदानी ममम्प्राप्तः शापकालो निवारि
तः इत्युक्त्वा विललाप स राजा शोकसमाकुलः हा राम हा पुत्र हा सीते हा लक्ष्मण गुणानिधे
त्वद्वियोगादहं मृत्युं प्राप्स्ये कैकेयीसंभवे वदन्नेवं दशरथो प्राणांस्त्यक्त्वा दिवंगतः कौशल्या च
सुमित्रा च तथान्या राजयोषितः चुक्रुशुश्च विलेपुश्च उरस्ताडनपूर्वकं वशिष्ठः प्रययौ तत्र
मंत्रिभिराहतः तैलद्रोण्यां दशरथं दित्वा हतानतयाब्रवीत् वशिष्ठ उवाच गच्छतं त्वरि
तं सादा युधाजिन्नगरं प्रति तत्रास्ते भरतः श्रीमान् शत्रुघ्नसहितः प्रभुः उच्यतां भरतः शीघ्र
मागच्छतु ममाज्ञया अयोध्यां प्रति राजानं कैकेयी चापि पश्यतु इत्युक्तास्त्वरितं दूता गत्वा
भरतमातुलं युधाजितं प्रणम्योचुर्भरतं सानुजं प्रति वसिष्ठस्त्वब्रवीद्राजन् भरतः सानुजं

सुव्रत तमाह भरतस्तातो म्रियमाणः किमब्रवीत् श्रीरामेति मुक्तं हि सर्वं ब्रूहि मम मातृके तमाह कैके
यी देवी भरतं भयवर्जिता शृणु वत्स विशेषेण पङ्क्तं गुरुसन्निधौ राजा मरणवेलायां राज्यं दत्तं तवै
व हि रामस्तु वनवासाय प्रेषितः सह सीतया लक्ष्मणोनुययौ तं हि त्वमिदानीं सुखी भव हा राम
हा सीते ति लक्ष्मणेति पुनः पुनः विलपन्नेवं स्वर्गं चिरं देहं त्यक्त्वा दिवं ययौ इति मातृवचः श्रुत्वा
निमग्नः शोकसागरे तमाह भरतो हे वरामः सन्निहतो नु किं तदानीं लक्ष्मणो वापि सीता वा कु
त्र गताः कैकेय्युवाच रामस्य यौवराज्यार्थं पित्रा ते संभ्रमात्कृतः त्वद्राज्यप्रदानाय तत्स
र्वं विभ्रमाचरं राज्ञा दत्तं हि मे पूर्वं वरदेन वरद्वयं याचितं तदिदानीमेतयोरेकेन ते रिक्तं रा
ज्यं रामस्य चैकेन मुनिव्रतम खण्डितं तुत सत्यपरो राजा राज्यं दत्वा तवैवाहि रामं संप्रेषयामा
स वनमेव पिता तव सीता प्यानुगता रामं पतिव्रत्यमनुपालिनी सौभ्रात्रं दर्शयन् रामम नुयातो
पि लक्ष्मणः वनं गते षु सर्वेषु राजा तानेव चिंतयन् प्रलपन् राम रामेति ममार रत्नपसत्तमः
इति मातुर्वचः श्रुत्वा वज्राहत इव द्रुमाः पपात भूमौ निःसंज्ञः स्नेहदुःखातुरः खिन्ना तदा कैके
यी पुनरप्याह वत्स शोकेन किं तव राज्ये महति संप्राप्ते दुःखस्यावसरः कुतः इति ब्रुवंतीमा
लोक्य मातरं प्रदहन्निव भरत उवाच असंभाष्या हि पापे मे घोरे त्वं भर्तृघातिनि पापे
त्वद्गर्भजातोऽहं पापश्चानुत्तमोऽस्मि ते अहमग्निं प्रवेक्ष्यामि विषं वा भक्षयाम्यहं खड्गं वाप्य
थ चात्मानं हत्वा यास्यामि यमक्षयं भर्तृघातिनि दुष्टे त्वं कुंभीपाकं गमिष्यसि इति निर्भत्स्य

स्कृत्यसपितुर्देहंविधिदृष्टेनकर्मणा एकादशेऽहनिप्राप्तेब्राह्मणान्वेदपारगान् भोजया
मासविधिवत्तन्पेयसहस्रशः उद्दिश्यपितरंतत्रब्राह्मणेभ्योधनंवहु ददौगवांसहस्राणि
ग्रामान्रत्नावराणिच एवंक्रियांपरांकृत्वामुक्तोमापितृकारणात् ततोगृहंसमागत्यसो
ध्यैःसहानुजः अवसन्नगृहेतत्रराममेवानुचिंतयन् वशिष्ठेनसहभ्रात्रामंत्रिभिः
परिवारितः भरतउवाच तथापिनसुखंलेभेभरतःसानुजःसदा रामेरण्यंप्रयातेसहज
नकसुतालक्ष्मणाभ्यांहिघोरे मातामेरक्षसीवपदहंतिहृदयंदर्पेनारेवसायः गंगाम्भा
शपमयःस्थिरमतिरखिलेहरतोप्यराज्यं रामेहीनासमेनैस्मिनरुचिरमुखेनित्यमेवानुसे
वे इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेअयोध्याकांडेसप्तमोऽध्यायः ७ ॥
सूतउवाच वशिष्ठोमुनिभिःसार्द्धंमंत्रीभिःपौरवासिभिः राज्ञासभांदेवसभोपमांप्रावि
शद्विभु तत्रासनेसमासीनश्चतुर्मुखइवापरः आनीयभरतंतत्रउपवेश्यसहानुजं अब्रवी
द्वचनंदेशकालोचितमरिंदम वशिष्ठउवाच वत्सराज्येभिषेक्ष्यामित्वामद्यपितृशास्त
नं कैकेय्यायाचितंराज्यंत्वदर्थेपुरुषर्षभ सत्यसंधोदशरथःप्रतिज्ञायददौकिल अभि
षेकोभवत्वद्यमुनिभिर्मंत्रपूर्वकं तच्छ्रुत्वाभरतोप्याहममराज्येनकिंमुने रामःराजा
धिराजस्तुवयंतस्यैवकिंकराः सुप्रभातेगमिष्यामःराममानेतुमंजसा अहंस्वयंमात
रश्चकैकेयीराक्षसीविना हनिष्यधुनोवाहंकैकेयीमातृगंधिनी किंतुमोनारघुश्रेष्ठ

मू.
३२

समस्यादर्शयस्वमे त्वेरामस्यप्रियतमो भक्तिमानस्मि भाग्यवान् इतितं सान्त्व्य संस्मृत्य रामेसा
श्रुविलोचनः गुहेन सहितस्तत्र यत्र रामस्थितो निशि यथोदर्शयच्छयनस्थलं कुशास
मास्तृतं सीताभरणसंलग्नस्थानं बिन्दुभिरर्चितं दुःखेन सह हृदयो भरतः पर्यदेवयत्
अहो तिसुकुमारी या सीता जनकनंदिनी प्रासादे रत्नपर्यंके कोमलास्तरणोज्वले रामे
ण सहिता शेते सा कथं कुशविष्टरे सीता रामेण सहिता दुःखेन मम दोषितः धिग्मां जातो
स्मि कैकेय्या पापराशि समानन मन्निमित्तमिदं क्लेशो रामस्य परमात्मनः अहो तिसफ
लं जन्म लक्ष्मणस्य महात्मनः राममेवसरात्वेति वनस्थमपि हृष्टधीः अहं रामस्य दासोय
ते पोदासास्तेकिंकरः यदिस्यां सफलं जन्म मम भूयान्न संशयः भ्रातर्जानासि यदि तत्
कथयस्व ममाखिलं यत्र तिष्ठति तत्राहं गच्छाम्यानेतुमंजसा गुहस्तेषु हृदयं ज्ञात्वा सस्नेह
मब्रवीत् देवत्वमेव धन्योसि यस्य ते भक्तिरीदृशी रामे राजीवपत्राक्ष सीतया लक्ष्मणेन
या चित्रकूटाद्रिनिकटे मंदाकिन्या विहरतः मुनीनामाश्रमेपदे रामस्तिष्ठति सानुजः
जानक्या सहितो नेदानीं सुखमास्ते किल प्रभुः तत्र गच्छामहे शीघ्रं गंगां तर्तुमिहार्हसि ॥
इत्युक्त्वा त्वरितं गत्वा नावः पंचशतानि च समानयत्स सैन्यस्य तर्तुं गंगां महानदीं स्वय
मेवानिनायैकां राजनावं गुहस्तदा आरोप्य भरतं तत्र शत्रुघ्नं राममातरं वशिष्ठं च तथा
न्यत्र कैकेयी वान्ययोषितः उत्तीर्य भरतः श्रीमान् गुहेन सहितो ययौ तत्तो गंगाय ३२

स्त्रीहं नारं सहिष्यते स्वयं नेहं गमिष्यामि यद्वारेण दंडकान् शत्रुघ्नसहितस्तूर्णं मूर्धं
गच्छेन्नुवानवा रामो यथा वनं यान तया हं वल्कलांबरः फलमूलकृताहारः शत्रुघ्नसहितो
मुने भूमिशायी जटाधारी यावद्रामो निवर्त्तते इति निश्चित्य भरतस्तस्मिन्नेवावतस्थिवान्
साधुसाधो दितेसर्वे प्रशशंसुर्मुदान्विताः ततः प्रभाते भरते गच्छन्तं सर्वसैनिकाः अनुजग्मुः
सुमंत्रेण चोदिता मत्तकुंजराः कौशल्याद्या राजदाराः वशिष्ठप्रमुखा द्विजाः क्रमादयं ततो
भुवं सर्वे दृष्टतो पाश्चतो गृहीताः शृंगवेरपुरं गत्वा गंगाकूले समेततः उवास महती सेना शत्रुघ्न
परिनोदिना आगतं भरतं ज्ञात्वा गुहः शंकितमानसः महत्या सेनया सार्धमागतो भरतः
किल पापकर्तुं न वा याति रामस्य विदितात्मनः गत्वा तं हरयंत्ते ये यदि च्छद्मं करिष्यति ॥
गंगा नाचेत्समाकृष्य नावं तिष्ठंतु साध्याः ज्ञातयो मे समापन्नाः पश्यंतः सर्वतो दिशः ॥
इति सर्वान्समादिश्य गुहो भरतमागतः उपायनानि संगृह्य विविधानि बहून्यपि मायया
ज्ञातिभिः सार्द्धं वहुभिर्विविधायुधैः निवेद्योपायनान्यग्रे भरतस्य समेततः दृष्ट्वा भरतमासीनं
सानुजं सह मंत्रिभिः चीराम्बरधरं श्यामं जटामुकुटधारिणं राममेवानुशोचंतं राम रामेति
वादिनं नतानमशिरस्ताम्नमो गुहेहमिदमब्रवीत् भ्रातस्त्वं राघवेणात्र समेतः सख्यस्थितः
रामेणालिंगितः साश्रुनयनेनामलात्मना धन्यो सि हे तज्जात्वाहि यत्त्वया परिभाषिताः रामेरा
जीवपत्रान्तो लक्ष्मणेन च सीतया यत्र राम स्थितः एतत्सर्व्वमानदर्शयत सीतया संहितो यत्र

कामममलौकिकं भरतस्य ससैन्यस्य यथेष्टं च मनोरथं तथावद्वर्षे सकलं दृष्ट्वा लोकास्सर्वसैनिका ॥
वसिष्ठं पूजयित्वाग्रे भारद्वाजो हेन कर्मणा पश्चात्ससैन्यं भरतं तर्पयामास योगिराट् उषित्वा दि
नमेकं तत्राश्रमे स्वर्गसन्निभे अभिवाद्य पुनः प्रातर्भरद्वाजं सहानुजः नमस्कृत्वा ययौ पश्चाद्रा
मसंदर्शनोत्सुकः भरद्वाजकृतानुज्ञो वसिष्ठाद्यैः समं विभिः भरतस्तत्कृतानुज्ञः प्रययौ राम
संनिधिं चित्रकूटं गत्वा प्राप्य दूरे संस्थाप्य सैनिकान् रामसंदर्शनाकांक्षं प्रययौ भरतस्स्वयं श
त्रुघ्नेन समं वेणगुहेन च परंतप तपस्विमंडलं सर्वं विचिन्वंतोन्यवर्त्तयन् अदृष्ट्वा रामस्य
भवनमपृच्छदृषिमंडले भरतउवाच भोभो मुनिवरः सर्वे शृण्वंतु वचनं मम रामस्याश्र
समागत्य कुत्रास्ते सीतया सह पर्णशालोत्कृता तेन किंवारण्यप्रवेशने कुत्रास्ते सीतया सार्द्धं
लक्ष्मणेन रघूत्तमः ऊचुरग्रे गिरेः पश्चाद्गंगायाः उत्तरे तटे विविक्ते रामसदनं रम्यं काननमं
ष्ठितं सफलैराम्रपनसैः कदलीखंडसंवृतं चंपकैः कोविदारैश्च पुन्नागैर्बहुलैस्तथा एवं द
र्शितमालोक्य मुनिभिः भरतोग्रतः हर्षाद्ययौ रघुश्रेष्ठभवनं मैत्रेणासह ददर्श दूरादतिभा
स्वरं शुभं रामस्य गेहं मुनिवृंदसेवितं वृक्षाग्रसंलग्नसुवल्कलाजिनं रामाभिरामं भरतः ।
सहानुजः इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे अयोध्याकांडे सप्तमोऽध्यायः ७
भरतउवाच अथ गत्वाश्रमपदं समीपं भरतो मुदा सीतारामपदैर्युक्तं पवित्रमभि

॥२०॥

योशीघ्रं भरद्वाजाश्रमं प्रति दूरे स्थाप्य महासैन्यं भरतः सानुजो ययौ आश्रमे मुनिमासीनं ज्व
लन्तमिव पावकं दृष्ट्वाननाम भरतः साष्टांगमतिभक्तितः ज्ञात्वा दाशरथिं प्रीत्या पूजयामास सन्मु
निराट् पप्रच्छ कुशलं दृष्ट्वा जटावल्कलधारिणं राज्यं प्रशासतस्तेऽद्य किमेतद्वल्कलादिकं ॥
आगतोऽसि किमर्थं त्वं विपिने मुनिसेविते भरद्वाजवचः श्रुत्वा भरतः साश्रुलोचनः भरत उवाच
सर्वं जानासि भगवन् सर्वभूताशयस्थितः तथापि पृच्छसे किंचित्तदनुग्रह एव मे कैकेय्या यत्कृ
तं कर्म रामराज्याभिघातनं वनवासादिकं वापि नहि जानामि किंचन भवत्पादयुगं मेऽद्य प्र
माणं मुनिसत्तम इत्युक्त्वा पादयुगलं मुनेः स्पृष्ट्वार्तमानसः ज्ञातुमर्हसि मां देव शुद्धो वाऽशु
द्धोऽथवा च मम राज्येन किं स्वामिन् रामे तिष्ठति राजनि किंकरोऽहं मुनिश्रेष्ठ रामचन्द्रस्य शाश्व
तः अतो गत्वा मुनिश्रेष्ठ रामस्य चरणान्तिके पतित्वा राजसंभारान् समर्प्यैव राघवं अभिषि
च्य वसिष्ठाद्यैः पौरजानपदैः सह नेष्येऽयोध्यां रमानाथं दासः सेवेऽतिनीचवत् इत्युदीरि
तमाकर्ण्य भरतस्य वचो मुनिः आलिंग्य मूर्ध्न्यवघ्राय प्रशशंस सविस्मयः भरद्वाज उवाच ।
वत्स ज्ञातं पुरैवैतद्भविष्यं ज्ञानचक्षुषा मा शुचस्त्वं परो भक्तः श्रीरामे लक्ष्मणादपि आतिथ्यं
कर्तुमिच्छामि ससैन्यस्य तवानघ अद्य भुक्त्वा ससैन्यस्त्वं श्वो गन्ता रामसंनिधिं यथाज्ञापयति
भवांस्तथेति भरतोऽब्रवीत् भरद्वाजस्तपः एत्याग्नीमीहोमगृहे स्थितः दध्यौ कामदुघां का
मवर्षिणीं कामदां मुनिः असृजत्कामधुक्सर्वं यथा